# श्रीनिघण्टशिरोमणिः ।

सटिप्पणः ।

आयुर्वेदपञ्चाननोपाधिजुषा

श्री जगन्नाथप्रसाद शुक्लेन

सम्पादितः प्रकाशितश्च ।

संवत् १९७१




THE

# NIGHANT SHIROMANI

*Edited by*

AYURVED PANCHANANA

PANDIT JAGANNATH PRASAD SHUKLA,

Editor "Sudhanidhi"

ALLAHABAD.

1914

PRICE 2/4/-] [मूल्यम् सपाद रूपक द्वयम् ।

# प्रकाशकका कथन ।



इस समय संस्कृत और हिन्दीमें जितने निघण्टु प्रकाशित हुए हैं, वे या तो केवल अपनी सम्मति प्रकाशित कर ग्रन्थ अपूर्ण रखते हैं, या अपने साथही अन्य ग्रन्थकारोंकी भी सम्मति उद्धृत कर ग्रन्थको आवश्यकतासे अधिक बढ़ा देते हैं। यह "निघण्टु-शिरोमणि" इन सबोंसे भिन्न प्रकारका है और पढ़ने, कण्ठ करने तथा संग्रह करनेके लिये बहुत ही उपयोगी और सचमुच नामके अनुसार निघण्टुओंमें शिरोमणि है। केवल एक इसी निघण्टुको पास रखनेसे दूसरे निघण्टुकी आवश्यकता नहीं पड़ती। कमसे कम एक दर्जन निघण्टुकारोंकी सम्मति तो अकेले यही प्रकाशित करता है; परन्तु ऐसी खूबीसे प्रकाशित करता है कि ग्रन्थ आवश्य-कतासे अधिक बढ़ने नहीं पाता और किसीकी बात छूटने भी नहीं पाती। इसमें ग्रन्थकारने पहले अपनी सम्मतिके अनुसार औषधियों-के नाम और गुण लिखे हैं और फिर भावप्रकाश, मेदिनीकोष, अमरकोष, राजनिघण्टु, मदनपाल निघण्टु, कैयदेव निघण्टु, धन्व-न्तरि निघण्टु, द्रव्यनिघण्टु, द्रव्यरत्नाकर, गणनिघण्टु, शिवनिघण्टु और शोढलनिघण्टुको छान कर देखा है कि मेरे कहे हुए नाम-गुणोंके अतिरिक्त इनमें और भी कोई नामगुण तो नहीं हैं। यदि दिखाई पड़े हैं तो केवल उन्हीं नाम गुणोंको ग्रन्थ या ग्रन्थकर्ताके नामके साथ उद्धृत कर दिया है जो उसके कथनमें नहीं है तथा अन्य निघण्टुओंमें भी नहीं हैं। इस प्रकार सब निघण्टुकारोंका कथन भी इसमें संगृहीत हो गया है और ग्रन्थका आकार भी नहीं बढ़ने पाया। इन्हीं सब गुणोंके कारण "आयुर्वेदविद्यापीठ" आरम्भसे इसे अपने पाठ्यक्रममें पसन्द करता आरहा है। बात भी

यही है कि इसका अवलोकन करनेके पश्चात् फिर ऐसा कोई नहीं जो इसका पक्षपात न करे। इसी तरह नामोंमें भी यदि इसके लिखे नाम वैद्योंको याद रहें तो किसी भी संस्कृत चिकित्सा ग्रन्थके लगानेमें उन्हें अड़चन नहीं पड़ सकती। ऐसे गुणविशिष्ट निघण्टुको दक्षिण देशके वेलापुर निवासी वैद्य सिद्धेश्वरने संग्रह किया और उन्हींकी आज्ञासे राघवकविने छन्दोबद्ध किया। यह नहीं मालूम कि इसकी रचनाका काल क्या है तथापि भावप्रकाशके पीछेका होनेके कारण अभी डेढ़ दो सौ वर्षसे पहलेका नहीं है। इसे पहले वैद्य-सम्मेलनके जन्मदाता आयुर्वेदोद्धारक स्वर्गवासी शङ्करदाजी शास्त्री पदे महोदयने सम्पादित कर प्रकाशित किया था और अब वही आवश्यक पादटिप्पणियां देकर तथा विषयोंका क्रम ठीक कर इस नवीन रूपमें पाठकोंके सामने आता है। टिप्पणियोंके कारण इसका आकार सवाया बढ़ गया है तथापि इसका दाम कुछभी नहीं बढ़ाया गया। आशा है वैद्यसमाजमें इसका बहुत आदर और प्रचार होगा जिससे जो रुपया इसमें फँसा है उससे अन्य उपयोगी पुस्तकें प्रकाशित की जा सकें।

**जगन्नाथ प्रसाद शुक्ल वैद्य**

दारागञ्ज-प्रयाग।



# अनुक्रमणिका ।

श्रीधन्वन्तरयेनमः ।

# श्रीनिघंटशिरोमणिः ।



मंगलाचरणम् ।

वंदे महागणपतिं ग्रंथनिर्विघ्नसिद्धये । लंबोदरं चतुर्बाहुं शुंडादंडविराजितम् ॥ १ ॥ आदौ निघण्टनालोड्य नामभिः पत्रकं कृतम् । सिद्धेश्वराख्यवैद्येन बेलापुरनिवासिना ॥ २ ॥ तदाज्ञया राघवस्तु निघंटानां शिरोमणिम् । अकरोद्भिषजां प्रीत्यै लोकोपकृतिहेतवे ॥ ३ ॥

## १ गुडूच्यादिवर्गः ।

### गुडूची-गुर्च ।

नामानि—गुडूच्यमृतवल्ली च ज्वरारिरमृता तथा । श्यामांवरा सुरकृता तथैव मधुपर्णिका ॥ १ ॥ छिन्नोद्भवाऽमृतलता छिन्ना चैव रसायणी । तथैव सोमलतिका तद्वदमृतसम्भवा ॥ २ ॥ वत्सादनी छिन्नरुहा विशल्या तु भिषक्प्रिया । कुण्डलिनी वयस्था च तथा चैव जिवंतिका ॥ ३ ॥ चंडहासा छन्निका च तथा नागकुमारिका । एते 'राजनिघंटे' तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४ ॥ धारा तु कुण्डली चैव छिन्नांगा चक्रलक्षणा । तन्द्रिका ज्वरनाशी च मण्डली देवनिर्मिता ॥५॥ सौम्या पित्र्या बहुच्छिन्ना प्रोक्ता 'धन्वंतरे' तथा । 'कैयदेवे' भिषक्श्रेष्ठैः 'सोमा' चैका प्रकीर्तिता ॥ ६ ॥ 'द्रव्यरत्नाकरे' चैव छिन्वा चैका स्मृता बुधैः । चक्रिका तंत्रिका चैव प्रोक्ता 'भावप्रकाशके' ॥ ७ ॥ तिक्तामृता भिषक्श्रेष्ठैः प्रोक्ता 'गणनिघंटके' । चत्वारिंशत्संख्यकाश्च संप्रोक्ता भिषजां वरैः ॥ ८ ॥

गुणाः—गुडूची कोष्णवीर्या च कषाया तिक्तका स्मृता । कृष्णज्वरवमीनां च नाशिनी भ्रमहारिणी ॥ ९ ॥ पांडुप्रमेहवातासृक्दाहहंत्री रसायनी । संप्रोक्ता भिषजां श्रेष्ठैः 'राज' नामनिघंटके ॥ १० ॥ रक्तार्शकुष्ठजन्तूनां त्रिदोषाणां विनाशिनी । ग्राही मेध्यायु प्रदेति

कफवातापहारिणी ॥ ११ ॥ कंडूघ्नमेध्या पित्तघ्नी बला 'धन्वंतरे' स्मृता । पाके मधुरसा हृद्या वन्हिकृत् कासनाशिनी ॥ १२ ॥ कामलामज्वरघ्नीति 'कैयदेवे' स्मृता बुधैः । दोषज्वरहरा चैव दीपनी 'द्रव्यरत्नके' ॥ १३ ॥

## २ कन्द गुडूची-कन्द गिलोय ।

नामानि—ततः कंदोद्भवा चैव तद्वत् कंदोभवा तथा । कन्दाभृता बहुच्छिन्ना तथा पिंडगुडूचिका ॥ १४ ॥ तथा बहुरुहा चैव पिंडालुः कंदरोहिणी । एवं 'राजनिघंटे' तु संप्रोक्ता भिषजां वरैः ॥ १५ ॥ शटीरूपा तु संप्रोक्ता 'द्रव्यरत्नाकरे' तथा । रसायनी मृत्तिका च चन्द्रहासा भिषक्जिता ॥ १६ ॥ कन्या 'धन्वन्तरौ' प्रोक्ता पुरातनचिकित्सकैः । विच्छिन्ना 'कैयदेवे' तु संप्रोक्ता कविसत्तमैः ॥ १७ ॥ एतां चतुर्दशा प्रोक्ता गुणास्तु पूर्ववत्स्मृतः ।

गुणाः—कटुरुष्णा विषघ्नी च भूतज्वरविनाशिनी । वलीपलितनाशेति प्रोक्ता 'राजनिघंटके' ॥ १८ ॥

## ३ मूर्वा-मुरहरी ।

नामानि—मूर्वा दिव्यलता देवी मता मधुरसा तथा । मधुश्रेणी त्रिपर्णी च मरी मिश्रदली तथा ॥ १९ ॥ तिक्ता मधुमती चैव पृथक्पर्णी तथैव च । गोकर्णी लघुकर्णीका दहनी मोरटा तथा ॥ २० ॥ तेजस्विनी देवश्रेणी पीलुनीतमधूलिका । ज्वलिनी गोपवल्लीच निघंटे 'राजनामनि' ॥ २१ ॥ 'धन्वन्तरे' स्वादुरसा संप्रोक्ता भिषजां वरैः । वृषत्वचा मुरंगीका तद्वत्वभिरसा तथा ॥ २२ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः वर्णितास्तु न संशयः ॥ २३ ॥ तेजस्विनी स्रुवा चैव प्रोक्ता 'भावप्रकाशके' । वृषश्रेणी पृथुश्चैव प्रोक्ता 'गणनिघंटके' ॥ २४ ॥ सर्वात्वमरकोशे स्युरष्टत्रिंशत् प्रकीर्तितः ।

गुणाः—तिक्तोष्णा च कषायेति वमिकुष्टविनाशिनी ॥२५॥ कफवातप्रमेहघ्नी विषमज्वरहा 'नृपे' । 'धन्वंतरे' रसे स्वादु कंडुहा कविभिः स्मृतः ॥ २६ ॥ पाके गुरुरसा चैव त्रिदोषहरिणी तथा । कुष्टघ्नी वन्हिकृत्प्रोक्ता मदहा विषनाशिनी ॥ २७ ॥ मुखशोषहरा चैव सामा-

न्यज्वरहा तथा । तृष्णाहृद्रोगशमनी रक्तपित्तापहारिणी ॥२८॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता कविभिर्ध्रुवम् । श्लेष्मपित्तहरा प्रोक्ता 'द्रव्यनामनिघंटके' ॥ २९ ॥ मुखासृग्धारिणी प्रोक्ता 'गणनामनिघंटके' ।

## ४ पटोल-परवल ।

नामानि—ततः कटुफला चैव पटोलः कुलकस्तथा । 'राज' नामामृतलता कर्कशच्छद एव तु ॥ ३० ॥ पांडुर्पांडुफला चैव बीजगर्भस्तथैव च । ततो नागफलश्चैव कुष्ठारिस्तदनंतरम् ॥ ३१ ॥ पंचराजिफला चैव ज्योत्स्ना तु कासमर्दनः कुष्टघ्नो चैव संप्रोक्तो 'राजनामनिघंटके' ॥ ३२ ॥ राजनामा राजिफला पांडुका धन्वनामके । पटु 'स्त्वमरकोशे'च एकोनविंशति स्मृता ॥ ३३ ॥

गुणाः—तिक्तमुष्णं रसश्चैव कटुप्रोक्तं सदैव हि । बलासकफपित्तघ्नं कंडूकुष्ट विनाशनम् ॥ ३४ ॥ असृग्ज्वरघ्नं दाहघ्नं प्रोक्तं राजनिघण्टके । पत्रं तस्य भिषक्श्रेष्ठैः पित्तघ्नं कफनाशनम् ॥३५॥ रक्तदोषहरं चैव संप्रोक्तं नैव संशयः । फलं त्रिदोषशमनं वल्ली चैव कफापहा ॥ ३६ ॥ मूलं विरेचनं प्रोक्तं 'धन्वन्तरिनिघण्टके' । वल्ली शीतकरी प्रोक्ता श्लेष्मघ्नं बीजतैलकम् ॥ ३७ ॥ वाताशीतिहरं चैव 'द्रव्यरत्ने' प्रकीर्तितम् । फलं त्वग्दोषशमनं प्रोक्तं 'गणनिघंटके' ॥ ३८ ॥

## ५ काकोली ।

नामानि—काकोली मधुरा काकी वायसा वायसूलिका । क्षीरा तु ध्वंक्षिका वीरा शुक्ला धीरा तु मेदुरा ॥ ३९ ॥ ध्वांक्षोली स्वादुमांसा च वयस्था जीवनी तथा । एते 'राजनिघंटे तु सम्यक् प्रोक्ता भिषग्वरैः ॥ ४० ॥ कोकिला कविभिः प्रोक्ता 'धन्वंतरिनिघंटके' । काकोष्णी कवली काणा शुक्लक्षीरा तथैव च ॥ ४१ ॥ ततस्तु क्षीरशुक्लीका कायस्था च तपस्विनी । 'कैयदेवे' भिषकश्रेष्ठैरेते प्रोक्ता न संशयः ॥ ४२ ॥ वायसोली भिषक्श्रेष्ठैः प्रोक्ता 'मदनपालके' । चतुर्विंशतिसंख्या च संप्रोक्ता भिषजां वरैः ॥ ४३ ॥

गुणाः—शीतामधुरसा चैव क्षयपित्तानिलापहा । रक्तदाहहरा चैव ज्वरदाहविनाशिनी ॥ ४४ ॥ कफनिर्हरिणी प्रोक्ता तथा शुक्रविवर्धिनी । प्रोक्ता 'राजनिघंटे' स्मिन् भिषक्श्रेष्ठैर्नसंशयः ॥ ४५ ॥ वृष्या गुरु वृंहणं च वातपित्तहरा तथा । शोषघ्नी 'कैयदेवे' च संप्रोक्ता भिषजां वरैः ॥ ४६ ॥ रक्तपित्तहरा चैव हृद्रोगशमनी तथा । प्रोक्ता 'द्रव्यनिघंटे' च भिषक्शास्त्रविशारदैः ॥ ४७ ॥ वाततृषाहरा चैव प्रोक्ता 'मदनपालके' । वातदाहास्रपित्तघ्नी शोषहा 'भावनामके' ॥ ४८ ॥

## ६ क्षीरकाकोली ।

नामानि—ततस्तु क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्था क्षीरमधुरा वीरा क्षीरविषाणिका ॥ ४९ ॥ जीववल्ली जीवशुक्ला 'राजनाम्नि' निघंटके । क्षीरिणी तु सुकोली च वयस्था च क्षुरा तथा ॥ ५० ॥ विषाणिका 'कैयदेवे' कविभिः परिकीर्तिता । सुराह्वया क्षिराह्वा च 'द्रव्यरत्नाकरे' स्मृता ॥ ५१ ॥ तथा 'मदनपाले' च सुराह्वा परिकीर्तिता । धारा तु क्षीरवल्लीका शुक्ला 'भावप्रकाशके' ॥ ५२ ॥

गुणाः—हृद्रोगशमनी प्रोक्ता 'द्रव्यनामनिघंटके' ।

## ७ अरण्यमुद्ग-वनमूंग ।

नामानि—मुद्गपर्णी क्षुद्रसहा शिखी मार्जारगंधिका ॥ ५३ ॥ वनजा रिंगणी ह्रस्वाश्रूपणी च कुरंगिका । कोशिला काकमुद्गा च वनमुद्गा वनोद्भवा ॥ ५४ ॥ अरण्यमुद्गा वन्या च प्रोक्ता 'राजनिघंटके' । शिष्यंबुभेत्वह्रस्वा च तथैव वनजारिणी ॥ ५५ ॥ 'धन्वंतरिनिघंटे' च प्रोक्तैषा कविसत्तमैः । मृगगंधा शिंबिपर्णी वनत्रा सिंबिरिंगिणी ॥ ५६ ॥ सहा तु 'कैयदेवे' च शिंबिसिंही प्रकीर्तिता । कुरंटिणी सुवर्णी च सिंही शृंगी तथैव च ॥ ५७ ॥ प्रोक्ता 'मदनपाले' च भिषक्शास्त्रविशारदैः । अलिपका चक्रपर्णी च प्रोक्ता 'भावप्रकाशके' ॥ ५७ ॥ एकत्रिंशतिसंख्याका संप्रोक्ता भिषजां वरैः ।

गुणाः—मुद्गपर्णी हिमा प्रोक्ता कासज्वरविनाशिनी ॥ ५६ ॥ वातरक्तापहा चैव प्रोक्ता 'राजनिघंटके' । स्वादु कृमिघ्नी कफहृत् प्रोक्ता 'धन्वंतरे' ध्रुवम् ॥ ६० ॥ लघु दोषत्रयघ्नी च ग्रहणीदोषहारिणी । अर्शोतिसारहंत्रीति संप्रोक्ता 'कैयदेवके' ॥६१॥ जन्तुज्वरहरा चैव 'द्रव्यरत्नाकरे' स्मृता । रुक्षा 'भावप्रकाशे' च संप्रोक्ता भिषजां वरैः ॥ ६२ ॥ कफपित्तहरा चैव तथैव रक्त (?) स्तंभिनी ॥ प्रोक्ता 'गणनिघंटे' च भिषक्शास्त्रविशारदैः ॥ ६३ ॥

## ८ जीवंती ।

नामानि—जीवंती जीवनी जीव्य जीवती जीवदात्रिका । शाकश्रेष्ठा जीवभद्रा भद्रा मंगल्यनामका ॥ ६४ ॥ एषा 'राजनिघंटे' तु संप्रोक्ता भिषजां वरैः । यशस्करी मागधेया तथैव जीववर्द्धिनी ॥ ६५ ॥ क्षुद्रजीवा यशस्या च शृंगाटी जीवपुष्पिका । कांजिका शशिबीजा च पिंगला जीवनीयका ॥६६॥ 'धन्वंतरिनिघंटे' च प्रोक्तैषा भिषजां वरैः । मधुस्रवा जीवपुष्पा तुल्या भद्रमधुस्रवा ॥ ६७ । नामधेया पुत्रभद्रा जीवदेवा सुखंकरी । शृंगराटी 'कैयदेवे' संप्रोक्ता कविसत्तमैः ॥ ६८ ॥ 'द्रव्यरत्नाकरे' चैव जीवना परिकीर्तिता । ततः पयस्विनी चैव प्रोक्ता भावप्रकाशके ॥ ६६ ॥ तथा 'गणनिघंटे' च संप्रोक्ता शिंबिराटिका । द्वात्रिंशत्संख्यया प्रोक्ता जीवंती परिकीर्तिता ॥ ७० ॥

गुणाः—जीवंती मधुरा शीता रक्तपित्तहरा तथा । रक्तवातक्षयहरा दाहज्वरविनाशिनी ॥ ७१ ॥ कफदा वीर्यदा चैव प्रोक्ता 'राजनिघंटके' । चक्षुष्या दोषनुत् प्रोक्तं 'धन्वंतरिनिघंटके' ॥ ७२ ॥ स्निग्धा ग्राही टीलघुला (?) बल्या 'कैये' स्मृता बुधैः ॥

## ९ बृहज्जीवन्तिका-बड़ी जीवन्ती ।

नामानि—बृहत्पूर्वा पुत्रभद्रा मधुरा च प्रियंकरी ॥ ७३ ॥ बृहती जीवपुष्पा च यथैव च यशस्करी । प्रोक्ता 'राजनिघंटे' तु सप्तसंख्या न संशयः ॥ ७४ ॥ भूतविद्रावणी ज्ञेया वेगाद्रसनियामका ।

गुणाः—बृहज्जीवन्तिका चैव बहुवीर्या रसायनी ॥ ७५ ॥ भूतद्रावीति संप्रोक्ता 'राजनामनिघंटके' ।

## १० हेमजीवन्ती । *

नामानि—ततस्तु हेमजीवंती तृणग्रन्थी हिमाश्रया। स्वर्णपर्णी सुजीवन्ती स्वर्णजीवा सुपर्णिका ॥ ७६ ॥ हेमपुष्पी स्वर्णलता जीर्णजीवन्तिका तथा। हैमवल्ली हेमलता प्रोक्ता 'राजनिघंटके' ॥ ७७ ॥ सैषा द्वादशसंख्याका संप्रोक्ता भिषजां वरैः। स्वर्णजीवन्तिका वृष्या चक्षुष्या मधुरा च सा ॥ ७८ ॥ शिशिरा वातपित्तासृग्दाहजिद्बलवर्धिनी।

गुणाः—स्वर्णजीवंतिका 'वृष्या' 'चक्षुष्या' मधुरा तथा ॥७९॥ शिशिरा वातपित्तासृग्दाहघ्नी बलवर्धिनी। प्रोक्ता 'राजनिघंटे' च भिषग्विद्याविशारदैः ॥ ८० ॥

## ११ लिङ्गिनी-शिवलिङ्गी ।†

नामानि—लिङ्गिनी बहुपुत्री च ईश्वरी शिववल्लिका। स्वयंभूलिङ्गसंभूता लैङ्गी चित्रफला ततः ॥ ८१ ॥ चण्डली लिङ्गजा देवी चण्डा या स्तंभिनी तथा। शिवजा शिववल्लीति प्रोक्ता 'राजनिघंटके' ॥ ८२ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता लिङ्गसम्भवा। पञ्चमी संख्यका प्रोक्ता पुरातनचिकित्सकैः ॥ ८३ ॥ लिङ्गिनी कटुरुष्णा च दुर्गन्धा च रसायनी। सर्वसिद्धिकरा दिव्या वश्या रसनियामिनी ॥ ८४ ॥

गुणाः—लिङ्गिनी कटुरुष्णा च दुर्गन्धा च रसायनी। सर्वसिद्धिकरी दिव्या 'नृपे' रसनियामिनी ॥ ८५ ॥ पित्तजा तु क्षयकरी कफकुष्ठविनाशिनी। 'द्रव्यरत्नाकरे' प्रोक्ता भिषग्विद्योपजीविभिः ॥ ८६ ॥

## १२ कोशातकी-कडूतरोई ।

नामानि—कोशातकी कृतच्छिद्रा जालिनी कृतवेदना। क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिनी तथा ॥ ८७ ॥ प्रोक्ता 'राजनिघण्टे' च

---

*इसके फलसे पीला दूध निकलता है और दण्डीमें एक ही फल लगता है।

†इसके बीजमें जलहरी सहित शिवलिङ्गका चिन्ह रहता है। इसे हिन्दीमें पचगुरिया भी कहते हैं। यह बनमें आपही उगती और वृक्षोंपर लता चढ़ती है।

भिषक्शास्त्रविशारदैः । श्वेतघाषा कोशवती कर्कोटी च मृदङ्गिका ॥ ८८ ॥ उवला तु तिक्तघोटाली ज्योत्स्ना च कर्कटच्छदा । छली च घोषका चैव 'कैयदेवे' प्रकीर्तिता ॥ ८९ ॥ 'द्रव्यरत्नाकरे' चैव वेदिभा परिकीर्तिता । अक्षाहा घोसला चैव तथैव कर्कशच्छदा ॥९०॥ 'अमरे' चैव कविभिः प्रोक्ता धामार्गवा ध्रुवम् । त्रयोविंशतिसंख्याका संप्रोक्ता कटुजालिनी ॥ ९१ ॥

गुणाः—कटुकोशातकी चैव शिशिरा कटुका तथा । कषायकल्प-विख्याता पित्तवातकफापहा ॥ ९२ ॥ मलाध्मानविशोधी च प्रोक्ता 'राजनिघण्टके' । पक्वाशय विशोधी च तिक्तामाशयशोधिनी ॥ ९३ ॥ रुक्षा लघ्वी च विख्याता पाके तु कटुका स्मृता । गरोदरं जयेत् कासं पांडुशोफविनाशिनी ॥ ९४ ॥ कफप्लीहार्शगुल्मघ्नी कामला-कुष्ठनाशिनी । फलं पाके हिमं प्रोक्तं 'कैयदेवनिघण्टके' ॥ ९५ ॥ फलं तु भेदनं प्रोक्तं शीतलं स्यात्तथा लघु । त्रिदोषमेहनुत् प्रोक्तं वैद्यै 'र्मदनपालके' ।

## १३ स्वयंगुप्ता-खाजकेंवाच ।

नामानि—स्वयंगुप्ताथ गुप्ता च कपिकच्छु महर्षिभिः ॥ ९६ ॥ लांगुली कुण्डली चण्डा मर्कटी दुरभिग्रहा । कपिरोमफलाऽगुप्ता दुःस्पर्शा कच्छु राजया ॥ ९७ ॥ प्रावृषेण्या भूकशिंबी बदरी बद-र्षभी । शिंबी वराहिता तीक्ष्णा रोमालुर्वनरूरिका ॥ ९८ ॥ किश-रोमा रोमवल्ली चैषा 'राजनिघण्टके' । शीतपित्तव्रणास्रघ्नी प्रोक्ता 'राजनिघण्टके' ॥ ९९ ॥ वातघ्नी कविभिः प्रोक्ता 'धन्तरिनिघण्टके'। 'कैयदेवे' बृहणीति भिषग्भिः परिकीर्तिता ॥ १०० ॥

गुणाः—बीजं तु वातशमनं वाजीकरणमेव च । प्रोक्तं 'मदन-पाले' च भिषक्शास्त्रविशारदैः ॥ १०१ ॥ गुरु तिक्ता वातहरा बल्या कफविनाशिनी । प्रोक्ता 'भावप्रकाशे' च पुरातनचिकित्सकैः ॥१०२॥ सीता हिमेति संप्रोक्ता गणनामनिघण्टके ।

## १४ कटुतुंबी-कडूलौकी ।

नामानि—कटुतुम्बी कटुफला तुम्बिनी कटुतुम्बिनी ॥ १०३ ॥ बृहत्फला राजपुत्री तिक्तबीजाजतुंबिका । प्रोक्ता 'राजनिघण्टे' च

भिषक्शास्त्रविशारदैः ॥ १०४ ॥ कटुकालांबुनी तुंबी लंबा पिण्डफला तथा । इक्ष्वाकु क्षत्रियवरा तथैव च महाफला ॥ १०५ ॥ धन्वन्तरौ स्मृता नूनं भिषक्शास्त्रपरायणैः । ततोऽत्र चिट्फला चैव राजन्या प्रवरा वरा ॥ १०६ ॥ तिक्तालांबू दुग्धनिका दुग्धिका तदनन्तरम् । 'कैयदेवे' प्रयुक्ताश्च सर्वा द्वाविंशतिः स्मृता ॥ १०७ ॥

गुणाः—कटुतुंबी भवेत्तीक्ष्णा वान्तिकृत् श्वासनाशिनी । कटुस्यात्कफवातघ्नी शोधनी व्रणशूलहृत् ॥ १०८ ॥ शोफघ्नी विषनाशा च प्रोक्ता 'राजनिघण्टके' । रसे पाके हिमा लघ्वी प्रोक्ता 'गणनिघण्टके' ॥ १०९ ॥ पाके कट्वी वातपित्तश्वासज्वरविनाशिनी । अहृद्या शीतला प्रोक्ता 'कैयदेवनिघण्टके' ॥ ११० ॥ वातपित्तज्वरान् हन्ति हृद्या भावप्रकाशके ।

## १५ अमरवल्ली-अमरबेल ।

नामानि—खवल्ल्याकाशवल्ली च दुस्पर्शा व्योमवल्लिका ॥ १११ ॥ प्रोक्ता 'राजनिघण्टे' तु ततस्त्वमरवल्लरी । 'भावप्रकाशे' विदिता पञ्चसंख्या भिषग्वरैः ॥ ११२ ॥

गुणाः—आकाशवल्ली कटुका मधुरा पित्तनाशिनी । वृष्या रसायनी वल्या दिव्यौषधि 'नृपे' स्मृता ॥ ११३ ॥ ग्राही तिक्ता पिच्छिला च तुवरा नेत्ररोगहृत् । 'भावप्रकाशे' संप्रोक्ता पुरातनभिषग्वरैः ॥ ११४ ॥ हृद्याग्निकारि विख्याता पित्तश्लेष्महरा भवेत् ।

## १६ देवदाली-बन्दाल ।

नामानि—जीमूतका कंटफला सहावेणी गरागरी ॥ ११५ ॥ तथा कोशफला घोरा कदं ा कट्फला तथा । विषहा कर्कटी चैव देवदाली तदुत्तरम् ॥ ११६ ॥ ततस्तु सारसुषिका कोशवृत्ता तथैव च । आखुविषहा ददाली च ततो रोमषपत्रिका ॥ ११७ ॥ तुरङ्गीका च कर्मारी देवतांगा च ताडका । 'द्रव्यरत्ने' ह्यालवेणी भिषग्भिः परिकीर्तिता ॥ ११८ ॥ ततारका देवतांडा जाली 'मदनपालके' । खरागरी कोशसंस्था संप्रोक्ता भिषजां वरैः ॥ ११९ ॥

गुणाः—तिक्तोष्णा देवदाली स्यात्कटुः पांडुकफापहा । दुर्नामश्वासकासघ्नी कामला भूतनाशिनी ॥ १२० ॥ 'राजनाम्नि' निघण्टे च भिषग्भिः परिकीर्तिता । फलं कृमिघ्नं संप्रोक्तं श्लेष्मघ्नं गुल्मसंस्रनम् ॥ १२१ ॥ शूलवातहरं प्रोक्तं वैद्यै 'भावप्रकाशके' । वांतिहाऽखुविषघ्नी च कफपांडुविनाशिनी । 'धन्वन्तरिनिघण्टे' च भिषग्भिः परिकीर्तिता । रसे तिक्ता तु पाके च तीक्ष्णा वातामहारिणी ॥ १२३ ॥ कफशोथविनाशा च कासज्वरविनाशिनी । हिध्मारुचिक्षयघ्नी च कृमिनुत् 'कैयदेवके' ॥ १२४ ॥

## १७ वंध्याककौंटकी-बांझखेकसा ।

नामानि—वन्ध्यादेवी नागहन्त्री वन्ध्या कर्कोटकी तथा । नागरातिर्मनोज्ञा च दिव्या पथ्या सुकन्दका ॥१२५॥ पुत्रदात्री च श्रीकन्दा कन्दवल्लीश्वरी तथा । सुगन्धा सर्पदमनी कुमारी विषकंटकी ॥ १२६ ॥ भूतहन्त्री परा चैव प्रोक्ता 'राजनिघण्टके' । नागारी नागदमनी प्रोक्ता 'धन्वन्तरौ' तथा ॥ १२७ ॥ विषमा शमनी चैव निष्फला नागघातिनी । ततस्तु मज्जादमनी 'कैयदेवे' प्रकीर्तिता ॥ १२८ ॥ तथा 'मदनपाले' तु प्रोक्ता योगेश्वरी बुधैः । षड्विंशति च संख्याका संप्रोक्ता भिषजां वरैः ॥ १२९ ॥

गुणाः—वन्ध्याकर्कोटकी तिक्ता कटूष्णा कफनाशिनी । स्थावरादिविषघ्नी च संप्रोक्ता 'राजनामके' ॥ १३० ॥ पाके कटुरुष्णवीर्या प्रोक्ता 'गणनिघण्टके' । विषद्वयं शिरोरोगं कन्दोहन्तीति वच्चके ॥ १३१ ॥ लघु व्रणविशोधी च बलासाही विषापहा । विसर्पघ्नी 'कैयदेवे' संप्रोक्ता वैद्यनायकैः ॥ १३२ ॥

## १८ तिक्ततुंडी-कडूकुन्दरु ।

नामानि—तिक्ततुंडी तु तिक्ताख्या कटुका कटुतुंडिका । तुंडी 'राजनिघण्टे' तु संप्रोक्ता पञ्चसंख्यका ॥ १३३ ॥

गुणाः—कटुतुंडी कटुरसा कफवांतिविषापहा । रक्तपित्तारुचिर्हन्ति रेचनी 'राजनामके' ॥ १३४ ॥

## १९ आखुकर्णी-मूसाकानी ।

नामानि—आखुकर्णी तु कृशिका द्रवन्त्युन्दिरकर्णिका ॥१३५॥ चित्रा सुकर्णी न्यग्रोधी तथा मूषिककर्णिका । बहुकर्णी वृश्चिपर्णी माता भूमिचरी तथा ॥ १३६ ॥ चंडा च शंबरी चैव तथैव बहुपादिका । पृथक्श्रेणी वृषा चैव पुत्रश्रेणी तदुत्तरम् ॥ १३७ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । मूषिका च विषा चैव त्वखुपर्णी तदुत्तरम् ॥ १३८ ॥ 'धन्वन्तरिनिघण्टे' च संप्रोक्ता भिषजां वरैः । मूषकश्रवणी लीका भूदर्याखुश्रुतिच्छदा ॥ १३९ ॥ श्रवणा वृषकर्णी च तथैव भूधरप्रिया । 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ १४० ॥ वृश्चिपर्णीन्द्रपर्णी च 'द्रव्यरत्ने' भिषक्जनैः । पर्णिका भूदरीजा च प्रोक्ता 'भावप्रकाशके' ॥ १४१ ॥ पृथक्पर्णी शुभश्रेणी तथा भूमिरदश्रवा । श्रवला चैव कान्ता च तद्वदिंदिरकर्णिका ॥ १४२ ॥ प्रोक्ता 'गणनिघण्टे' तु सप्तत्रिंशतिसंख्यका ।

गुणाः—आखुकर्णी कटूष्णा च कफपित्तापहा सरा ॥ १४३ ॥ आनाहज्वरशूलघ्नी पाचनी 'राजनामके' । हृद्रोगकफजन्तुघ्नी 'धन्वन्तरिनिघण्टके' ॥१४४॥ विपाके कटु मूत्रघ्नी प्रोक्ता कैयनिघण्टके । लघु शीता तिक्ता च कषाया भावनामके ॥ १४५ ॥

## २० इन्द्रवारुणी-लघुइन्द्रायण ।

नामानि—ऐंद्रींद्रवारुणी चैव त्वरुणा च मृगादनी । गवादनी क्षुद्रसहा सूर्येंद्री चिर्भिटा तथा ॥ १४६ ॥ विषघ्नी गणकर्णिका माता च त्वमरा तथा । सुवर्णा सुफला तारा वृषभाक्षी तथैव च ॥ १४७ ॥ गवाक्षी पीतपुष्पा च हेमपुष्पी तदुत्तरम् । इन्द्रवल्ली क्षुद्रफला वारुणी बालकप्रिया ॥ १४८ ॥ रक्तेर्वारुविषलता शक्रवल्ली विषापहा । अमृता विषवल्ली च प्रोक्ता 'राजघिण्टके' ॥ १४९ ॥ इन्द्राव्हा इन्द्रवारु च इन्द्रा 'धन्वन्तरौ' स्मृता । ऐन्द्रवारु सुरेन्द्रा च तथैव सुरवारुणी ॥ १५० ॥ चित्रदेवी स्थाणुकर्णी धेनुःश्रेणी तथैव च । सूर्याव्हा चैव विख्याता तथैव मरुसम्भवा ॥ १५१ ॥ 'द्रव्यरत्नाकरे' चैव चन्द्री त्वेका प्रकीर्तिता । तुवसीति भिषक्श्रेष्ठैः

प्रोक्ता 'गणनिघण्टके' ॥ १५२ ॥ युग्माब्धिसंख्यका प्रोक्ता पुरातनचिकित्सकैः ।

गुणाः—अथेन्द्रवारुणी तिक्ता कटु शीता च रेचनी ॥ १५३ ॥ गुल्मपित्तोदरश्लेष्मकृमिकुष्ठज्वरापहा । 'राजनामनिघण्टे' तु संप्रोक्ता भिषजां वरैः ॥ १५४ ॥ मेहारुचिकृमिकफपांडुरोगापहारिणी । मूढगर्भहरा प्रोक्ता सर्वांगग्रन्थिमोचनी ॥ १५४ ॥ विषगंडामयहरा संप्रोक्ता 'कैयदेवके' । रसे पाके कटु लघु वीर्योष्णा कामलापहा ॥ १५५ ॥ कफपित्तश्लेष्महरा कण्ठरोगापचीघ्निका । श्वासकासप्लीहहरा गरोदरहरा तथा ॥१५६॥ मूढगर्भव्रणहरा प्रोक्ता 'धन्वन्तरौ' ध्रुवम् ।

## २१ महत्फला-बड़ी इन्द्रायण ।

नामानि—महत्फला चित्रवल्ली महेन्द्री त्रपुसी तथा ॥ १५७ ॥ ततश्चित्रफला चैव त्रपुसा तदनन्तरम् । पुत्रसा (त्रपुसा ?-पुत्रदा ?) चात्मरक्षा च विशाली दीर्घवल्लिका । बृहत्फला तु सौम्या च महेन्द्रवरुणी तथा ॥ १५८ ॥ बृहद्वारुणिका चैव प्रोक्ता 'राजनिघण्टके' । श्वेतपुष्पा मृगाक्षी च मृगेर्वारु मृगादनी ॥ १५९ ॥ हस्तिदन्ती नागदन्ती वारुणी गजचिर्भटी । 'धन्वन्तरौ' 'द्रव्यरत्ने' ह्यमेकी प्रकीर्तिता ॥१६०॥ एकविंशतिसंख्याका प्रयुक्ता भिषजां वरैः ।

गुणाः—महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी ॥ १६१ ॥ रसे वीर्ये विपाके च किञ्चिदेषा गुणाधिका ।

## २२ शङ्खिनी ।*

नामानि—यवतिक्ता महत्तिक्ता दृढपादा विसर्पिणी ॥ १६२ ॥ नाकुली नेत्रमीना च शङ्खिनी पत्रतंडुली । अक्षपीडा सूक्ष्मपुष्पी यवतिक्ता यशस्विनी ॥ १६३ ॥ माहेश्वरी तिक्तयवा तंदुली 'राजनामके' । इन्द्राक्षी चैव पिण्डा तु नेत्रमीला यशस्करी ॥ १६४ ॥

* शङ्खिनीकी बेलि शिवलिङ्गीके समान होती है और फल भी वैसे ही होते हैं। इसके फूलका भीतरी अंश ( बीजकोष ) शङ्खके आकारका होता है। पकने पर फलका रङ्ग लाल होता है। शिवलिङ्गीके समान इसके फल पर सफेद रेखा नहीं होती। इसका फल कटु और रेचक होता है।

'धन्वन्तरौ' निगदिता पुरातनचिकित्सकैः । तिक्तला चैव विश्वा च बहुफेना तदुत्तरम् ॥ १६५ ॥ अक्षपीडा बहुरसा प्रोक्ता 'गण-निघण्टके' । चोरपुष्पी कोशिनी च कोशी चैव प्रकीर्तिता ॥ १६६ ॥ षड्विंशतिसमाख्याता पुरातनभिषग्वरैः ।

गुणाः—यवतिक्ता तु तिक्ताम्ला दीपना रुचिकृत्तथा ॥ १६७॥ कृमिकुष्ठविषामघ्नी रेचनी च त्रिदोषनुत् । प्रोक्ता 'राजनिघण्टे' च वैद्यविद्याविशारदैः ॥ १६८ ॥ रसेपाके च मधुरा ह्युदरानाहनुद्रणे ।

## २३ ईश्वरी, रुद्रजटा-इशरमूल ।

नामानि—रौद्रीजटा रुद्रजटा रुद्रा सौम्या सुगन्धिका ॥ १६९ ॥ सुवहा चेश्वरी चैव धना रुद्रलता तथा । सुगन्धपत्रा सुरभी सुपत्रा च सुराह्वया ॥ १७० ॥ रुद्राणी पत्रवल्ली च जटा-वल्ली महाजटा । नेत्रपुष्करनामा च जटा रुद्रेति विंशतिः ॥ १७१ ॥ संप्रोक्ता भिषजां श्रेष्ठैः 'राजनाम्नि निघण्टके' ।

गुणाः—रसे कटुस्त्वीश्वरी च श्वासकासहरा 'नृपे' ॥ १७२ ॥ हृद्रोगभूतविद्रावी राक्षसानां निबर्हणी ।

## २४ ज्योतिष्मती-मालकांगनी ।

नामानि—ज्योतिष्मती स्वर्णलता विख्याताऽत्तुलप्रभा ॥ १७३ ॥ ज्योतिर्लता तु कटभी पिङ्गला तदनन्तरम् । क्षता मेध्या च मतिदा दुर्जरा च सरस्वती ॥ १७४ ॥ अमृता चैव संप्रोक्ता 'राज-नाम्नि' निघण्टके । सुवर्णलतिका चैव ज्योतिः कायाग्निभासका ॥ १७५ ॥ लवणोक्ता दुर्भरेति 'धन्वन्तरिनिघण्टके' । कंगुनिका तु कद्वीका कुन्दनी च वृषा तथा ॥ १७६ ॥ 'कैयदेवे' तु संप्रोक्ता तता वन्हिरुचिस्तथा । 'द्रव्यरत्नाकरे' चैव भिषग्भिः परिकीर्तिता ॥१७७॥ पारावतपदो चैव ज्योतिष्का तु कुकुन्दनी । प्रोक्ता 'भावप्रकाशे' च पञ्चविंशतिसंख्यका ॥ १७८ ॥

गुणाः—ज्योतिष्मती रसे तिक्ता किञ्चित्कटु स्मृता जनैः । दाहप्रदा वातकफान् हन्ति प्रज्ञाप्रदायिनी ॥ १७९ ॥ मेधाकृद्दीपनी प्रोक्ता 'राजनामनिघण्टके' । कषायामोहदा स्निग्धा वर्णदा व्रणपां-

कुहा ॥ १८० ॥ विसर्पघ्नी 'कैयदेवे' प्रोक्ता वैद्यैर्न संशयः । श्लेष्म-वातहरा चैव पाचनी कटुका सरा ॥१८१ ॥ अत्युष्णा शमनी तीक्ष्णा वन्हिदा 'धन्वनामके' । आमवातहरा प्रोक्ता 'मदने' भिषजां वरैः ॥ १८२ ॥ मुखरोगहरा चैव 'भावे' प्रोक्ता मनीषिभिः । कण्ठरोगहरा हिक्कानाशिनी 'गणनामके' ॥ १८३ ॥

## २५ तेजोवती-बड़ी मालकांगनी ।

नामानि—तेजोवती बहुरसा तथैव कनकप्रभा । तीक्ष्णा सुवर्णनकुली लवणा तदनन्तरम् ॥ १८४ ॥ अग्निदीप्ता तु तेजस्वी तथा सुरलता मता । अग्निफलाऽग्निगर्भा च कंगुनी वायसी स्मृता ॥ १८५ ॥ ततः शैलसुता चैव सुवेगा तदनन्तरम् । तीव्रा चैव तु काकांडो तथैव वायसादनी ॥ १८६ ॥ गीर्लता श्रीलता सौम्या ब्राह्मी लवणकिंशुका । पारावतपदी पीता पीततैला यशस्विनी ॥ १८७ ॥ मेध्या मेधावती धीरा प्रोक्ता 'राजनिघण्टके' । तेजोऽव्हा तेजनी शीता अर्शघ्नी वल्कला तथा ॥ १८८ ॥ पारिजाता महौजस्वी प्रोक्ता 'धन्वन्तरौ' ध्रुवम् । काकांडकी रूक्षफला वेगा काकादनी तथा ॥ १८९ ॥ पिण्या कूटत्वचा चैव "कैयदेवे" प्रकीर्तिता ॥१९०॥

## २६ श्वेतगिरिकर्णी-सफेद गोकर्णी ।

नामानी—अश्वखुराऽद्रिकर्णी च कटभी दधिपुष्पिका । गर्दभी शीतपुष्पी च श्वेतस्पंदापराजिता ॥ १९१ ॥ श्वेतभद्रा सुपुष्पी च विषहंत्री तदुत्तरम् । नागपर्यायकर्णी च अश्वाव्हाद्रिखुरी तथा ॥ ॥ १९२ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः । श्वेतपुष्पी तु श्वेता च तथैव गजकर्णिका ॥ १९३ ॥ श्वेतनामा तथा प्रोक्ता 'धन्वंतरिनिघंटके' । श्वेतस्पन्ना विषघ्नीकाऽमेदा च 'कैयदेवके' ॥ १९४ ॥ शीताऽपराजिता चैव तथैव मोहनाशिनी । प्रोक्ता मदन-पाले तु भिषक्शास्त्रविशारदैः ॥ १९५ ॥ अस्फोटा विष्णुकांता च प्रोक्ता 'भावप्रकाशके' ॥ तथा 'गणनिघंटे' च वाजिखूरा प्रकीर्तिता ॥ १९६ ॥ पंचविंशतिसंख्याका संप्रोक्ता भिषजां वरैः ।

गुणाः—श्वेता तु गिरिकर्णी स्यात् हिमा तिक्ता च पित्तनुत् ॥ १९७ ॥ चक्षुष्या विषहा प्रोक्ता त्रिदोषशमनी 'नृपे'। ग्रहणीकंठ-शूलघ्नी कुष्टमेहामनाशिनी ॥ १९८ ॥ व्रणशोफहरा प्रोक्ता 'केयदेव-निघंटके'। मूर्घ्नशूलहरा चैव सरा स्याद् 'द्रव्यनामके' ॥ १९९ ॥ ग्रहघ्नी 'मदने' प्रोक्ता कंठरोगहरा 'तथा'। हिमवीर्या सदा स्निग्धा वातपित्तहरा 'ऽमरे' ॥ २०० ॥

## २७ महानीला-नीला विष्णुकान्ता ।

नामानी—महानीला नीलपूर्वा गिरिकर्णी गवादनी । व्यक्त-गंधा निलस्पंदा प्रोक्ता 'राजनिघंटके' ॥ १ ॥ उग्रगंधा वल्लिवाता प्रोक्ता 'धन्वंतरौ' ध्रुवम् । महाश्वेता पाणिनी च वल्ली च विभवाशिका ॥ २ ॥ 'केयदेवे' भिषक्श्रेष्ठैर्गदिता नैव संशयः । महाकृष्णा नीलपुष्पा 'द्रव्यरत्नाकरे' स्मृता ॥ २०३ ॥ अव्यक्त-श्लक्ष्णा वशो स्निग्धा (?) रक्ता तथा । प्रोक्ता 'गणनिघंटे च भिषग्विद्याविशारदैः ॥ २०४ ॥ सर्वा षोडशसंख्याका भिषग्भिः परिकीर्तिता ॥

गुणाः—नीली तु गिरिकर्णी स्यात्तिक्ता च शिशिरा तथा ॥ २०५ ॥ रक्तातिसार हंत्री च ज्वरदाहहरा तथा । उन्मादमदकृत् श्वासकासच्छर्दिहरा 'नृपे' ॥ २०६ ॥ कफकुष्ठक्षयहरा पित्तजंतुहरा तथा । ग्रहघ्नी कंठरोगघ्नी प्रोक्ता 'मदनपालके' ॥ २०७ ॥ स्निग्धा तु हिमवीर्या च वातपित्तहरा 'गणे'।

## २८ क्षीरमोरटा-क्षीरमुरहरी ।

नामानि—मोरटा कर्णपुष्पी च पीलुपत्रा मधुश्रवा ॥ २०८ ॥ घनमूला दीर्घमूला परुषः क्षीरमोरटा । तथैव क्षीरबहुला प्रोक्ता 'राजनिघंटके' ॥ २०९ ॥ 'धन्वंतरौ' तेजनीति संप्रोक्ताभिषजां वरैः । अपरा कोरपुष्पीका स्वदली हस्तिपर्णिनी ॥ २१० ॥ बहुमूत्रा 'केयदेवे' प्रोक्ता वैद्यविचक्षणैः । कीर्णपुष्पा मद्यमूला प्रोक्ता 'गणनिघंटके' ॥ २११ ॥ एषा सप्तदशा नूनं भिषक्श्रेष्ठैः प्रकीर्तितम् ।

गुणाः—मोरटः क्षीरबहुलो मधुरः सकषायकः ॥ २१२ ॥ पित्तदाहज्वरान् हंति वृष्यो वलिविवर्धनः । मोरटा क्षीरबहुला कषाया मधुरा तथा ॥ २१३ ॥ पित्तदाहज्वरहरा वृष्या बलकरी 'नृपे' । कफपित्ते तृषाहंत्री दाहज्वरविनाशिनी ॥ २१४ ॥ रसे पाके हिमा प्रोक्ता 'केयदेवे' निघण्टके । विष्टंभी वातला रूक्षा 'केयदेवे' च कीर्तिता ॥ २१५ ॥ सदा गुरु पित्तरक्तमेहहा मेहहृत्तथा । तृड्दोषतृष्णाहृद्रोगकंडूकुष्ठहरा 'नृपे' ॥ ३१६ ॥

## २९ इंदीवरा=उतरण । *

नामानि—इंदीवरा युग्मफला दीर्घवृंता तमारिणी । पुष्पमंजरिका द्रोणी करभा नालिका तथा ॥ २१७ ॥ प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः । करंभा कर्कशा चैव सुगोणी तदनंतरम् ॥ २१८ ॥ उत्तमा रणिका चैव 'केयदेवे' प्रकीर्तिता । वारुणी या क्रूरवल्ली फलयुग्मा तथैव च ॥ २१९ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता भिषजां वरैः । ततोऽतिवारुणी चैव तथैव रुष्य (?) मंजरी ॥ २२० ॥ एषा 'गणनिघण्टे' च प्रोक्ता कर्कशनासिका । अष्टाद्शेति संख्याका प्रोक्ता वैद्यैर्विचक्षणैः ॥ २२१ ॥

गुणाः—इंदीवरा कटुः शीता पित्तश्लेष्महरा तथा । चक्षुष्या कासनुत् प्रोक्ता व्रणकृमिहरा 'नृपे' ॥ २२२ ॥ पापघ्नी योनिदोषघ्नी वातघ्नी व्रणरोपणी । प्रोक्ता 'गणनिघण्टे' च पुरातनचिकित्सकैः ॥ २२३ ॥ मूत्रकृच्छ्रहरा चैव दद्रुहा व्रणशोधिनी । गर्भयोनिवातरुजां नाशिनी 'केयदेवके' ॥ २२४ ॥ श्लेष्मवातहरा शोफनाशिनी 'द्रव्यनामके' ।

## ३० बस्तांत्री-बोकडी, पुंगली ।

नामानि—बस्तांत्री वृषगंधा च मेषांत्री वृषपत्रिका । अजांत्री बस्तिनी चैव प्रोक्ता 'राजनिघण्टके' ॥ २२५ वृषपत्री छागलांत्री 'केयदेवे' प्रकीर्तिता । नखगंधा स्रंसनी च अजाजी 'गणनामके' ॥ २२६ ॥

---

*इसके वामवर्ता और दक्षिणवर्ता दो भेद हैं ।

गुणाः—वस्तांत्री स्यात्कटुरसा कासदोषविनाशिनी । सुबीज-गर्भजननी कीर्तिता भिषगुत्तमैः ॥ २२७ ॥ बीजदा गर्भजननी प्रोक्ता 'राजनिघण्टके' ॥ अन्येगुणाद्यु पर्युक्तास्तस्मादत्र न वक्ष्यते ॥ २२८ ॥ लघु तिक्ता कषाया च मधुरा च हिमा तथा ॥ कटुपाका श्लेष्मापित्तनाशनी वातकोपनो ॥ २२९ ॥ 'केयदेवे' निघण्टे च प्रोक्ता वैद्यैर्विचक्षणैः ।

## ३१ सोमवल्ली—सोमलता ।

नामानि—सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता ॥ २३० ॥ सोमदा गुल्मवल्ली च यज्ञवल्ली द्विजाप्रिया । सोमक्षीरा तु सोमा च यज्ञांगा तदनंतरं ॥ २३१ ॥ प्रोक्ता 'राजनिघण्टे' च भिषक्-शास्त्रविशारदैः । यज्ञसेना 'मदनके' प्रोक्ता वैद्यविशारदैः ॥ २३२ ॥ 'भावप्रकाशे' सोमाक्षी संस्मृता भिषजां वरैः ॥ २३३ ॥ 'धन्वतरु:' परा नेता पक्षनेमी वह्निप्रिया । महायज्ञा महार्या च श्येनदूता मख-प्रभुः ॥ २३४ ॥ भेदी तु विशदा चैव तथैव रुरुत्तरा ॥ यज्ञा चैव हि संप्रोक्ता 'केयदेवे' भिषग्जनैः ॥ २३५ ॥ श्येनाकृतश्चंद्रतरु-र्महार्षा यज्ञज्ञातृका । प्रोक्ता 'गणनिघण्टे', च त्रिंशदेकोनसंज्ञका ॥ २३६ ॥

गुणाः—सोमवल्ली कटुः शीता मधुरा पित्तदाहनुत् । तृष्णो-पविषनाशेति प्रोक्ता वैद्यविचक्षणैः ॥ २३७ ॥

## ३२ प्रतिसोमा-महिषवल्ली । *

नामानि—सोमवल्लीभेदतः सा प्रोक्ता माहिषवल्लिका । सौम्या महिषवल्ली च प्रतिसोमाभ्रवल्लिका ॥ २३८ ॥ कांडशाखाऽपत्रवल्ली प्रोक्ता 'राजनिघण्टके ॥ २३९ ॥ षट्संख्यामुनिभिः प्रोक्ता वैद्यशास्त्रविचक्षणैः ।

गुणाः—रसवीर्यविपाके च सोमवल्लीसमा स्मृता ॥ २४० ॥ मेषकुष्ठगुणैः प्रोक्ता धातुसाम्यकरा तथा । सोमवल्ली सप्तगुणा प्रोक्ता महिषवल्लिका ॥ २४१ ॥

---

*इसमें पत्तियां नहीं काण्ड होते हैं । एक एक काण्ड एक एक बालिश्त पर होता है । इसकी बेलसे दूध निकलता है ।

## ३३ वत्सादनी-छिरहटा ।

नामानि—वत्सादनी सोमवल्ली विक्रांता मोचकाभिधा । पातालगरुडी तार्क्षी सौपर्णी गरुडी तथा ॥ २४२ ॥ महाबला दीर्घकांडा दीर्घवल्ली तदुत्तरम् । तथा दृढलता चैव प्रोक्ता 'राजनिघण्टके' ॥ २४३ ॥ सुदर्शना च चक्रांका तथैव मधुपर्णिका । वदघ्याली (?) मेचका च 'कैयदेवे' प्रकीर्तिता ॥ २४४ ॥ छिल्ली महाजटा चैव छल्ला हिड्डा तथैव तु । 'द्रव्यरत्नाकरे' चैव प्रोक्ता विंशतिसंख्यका ॥ २४५ ॥

गुणाः—वत्सादनी तु मधुरा पित्तदाहास्रनाशिनी । वृष्या सन्तर्पणी रुच्या विषदोषनिवारिणी । प्रोक्ता 'राजनिघंटे' च वैद्यविद्याविशारदैः ॥ २४६ ॥ उष्णशोफकफार्शघ्नी वातहा 'कैयदेवके' । ग्राही वृष्या 'द्रव्यनाम्नि' कफघ्नी वायुहृत् 'नृपे' ॥२४७॥

## ३४ गोपालकर्कटी-गोपालककडी, कचरी ।

नामानि—गोपालकर्कटी वन्या तथैव गोपकर्कटी । क्षुद्रेर्वारु क्षुद्रफला गोपाली क्षुद्रचिर्भटा ॥ २४८ ॥ प्रोक्ता 'राजनिघंटे' तु सप्तसंख्या भिषक्जनैः ।

गुणाः—गोपालकर्कटी शीता मधुरा पित्तनाशिनी । मूत्रकृच्छ्राश्मरीमेहशोषहा 'राजनामके' ॥ २४९ ॥

## ३५ काकनास-कौआठोड़ी । *

नामानि—काकनासा ध्वांक्षनासा काकतुंडी तु वायसी । सुरंगी तस्करस्नायू ध्वांक्षतुंडा सुनासिका । वायसाह्वा ध्वांक्ष-

*कौआठोड़ीकी वेलि बहुत विस्तृत होती है । इसके पत्ते पीपलीके समान और फूल भीतरसे सफेद और बाहरसे नीले रङ्ग के होते हैं । फूल में पांच पखुरी होती हैं । इस वेलिके सभी हिस्सोंमें दूध रहता है । यह वेलि बहुत कडू होती है । इसमें बर्छीके समान प्रत्येक पैनी दण्डी मेंदो फल लगते हैं । फलमें तीन धारा होती हैं । फलका सिरा कौवेकी चोंचके समान होता है । इसीसे इसे काकनासा कहते हैं । इस वेलिका सेवन करने—वान्ति होती और पित भड़कता है । यह बहुत तीव्र वनस्पति है । इसका दूध फोड़े अथवा गांठपर लगानेसे गांट जल्द बैठजाती है ।

वल्ली काकाक्षी ध्वांसनासिका ॥ २५० ॥ काकप्राणा विदात्री च प्रोक्ता 'राजनिघंटके'। ध्वांक्षतुंडफला ध्वांक्षी प्रोक्ता 'धन्वंतरौ' तथा ॥ २५१ ॥ काकांगी काकसंख्या च चीरस्नायुशिरोचला । काकास्या जीवनीया च 'कैयदेवे' प्रकीर्तिता ॥ २५२ ॥ ध्वांक्षेष्टा तरूरवृका 'द्रव्यरत्नाकरे' स्मृता । काकतुंडफला चैव प्रोक्ता 'धन्वंतरौ' तथा ॥ २५३ ॥ शिरावलेति मुनिभिः प्रोक्ता 'गणनिघंटके'। पंचविंशतिसंख्याका प्रोच्यते भिषजांवरैः ॥ २५४ ॥

गुणाः—काकनासा तु मधुरा शिशिरा पित्तनाशिनी । रसायनी दाढर्यकरी वलीपलितहा 'नृपे' ॥ २५५ ॥

## ३६ काकादनी-काकमारी ।*

नामानि—काकादनी काकपीलु काकशिंबी तु स्कला (शिरोबला ?)। ध्वांक्षादनी वक्रशल्या दुर्मोहा वायसादनी ॥ २५६ ॥ काकतुंडी ध्वांक्षनखी वायसी काकदंतिका । ध्वांक्षदंतीति प्रोक्ता विदिता 'राजनिघंटके' ॥ २५७ ॥ वक्रशल्या काकणंती प्रोक्ता 'धन्वंतरौ' तथा । पंचभूसंख्यका प्रोक्ता पुरातनचिकित्सकैः ॥ २५८ ॥

गुणाः—काकादनी कटूष्णा च तिक्ता चैव रसायनी । वातदोषहरा रुच्या वलीपलितस्तंभिनी ॥ २५९ ॥ प्रोक्ता 'राजनिघंटे' च पुरातनचिकित्सकैः । केश्या शिरोदोषहरा ग्रहहा 'द्रव्यनामके' ॥ २६० ॥ कषाया च रसे पाके कटुः स्यात्कफनाशिनी । शोफार्शहा च वमनी चित्रकुष्ठविनाशिनी ॥ २६१ ॥ 'कैयदेवनिघंटे' च प्रोक्ता वैद्यविचक्षणैः ।

---

*काकमारीकी बेलि कोकणप्रान्तमें बहुत होती है । इसके फल जामुनी रङ्गके छोटे अंगूरके समान होते हैं । एक दण्डी में दो या तीन फल लगते हैं । प्रत्येक फलमें गोल बिया निकलता है । यह वनस्पति बहुत विषैली है । उधरके जङ्गली लोग मछली और मक्खियां मारनेमें इसके फलका उपयोग करते हैं । कौवा इसके फलपर मोहित होकर चोंच मारता है; परन्तु विष चढ़ कर मर जाता है । इसीसे इसे काकनाशा कहते हैं । इसका बीज कडू और कृमि नाशक है ।

## ३७ रक्तगुंजा-लालगुंजा ।

नामानि—गुंजा सौम्यशिखंडी च कृष्णला त्वरुणा तथा ॥ २६१ ॥ ताम्रिका शीतपाकी च उच्चटा कृष्णचूडिका । रक्ता तु रक्तिका चैव किंभोजो भिल्लभूषणा ॥ २६२ ॥ एषा 'राजनिघंटे' तु संप्रोक्ता भिषजां वरैः । चटकी काकसाह्वा च प्रोक्ता 'धन्वंतरौ' तथा ॥ २६३ ॥ ततस्तु कृष्णकांबोजी तथैव काकमन्तिका । प्रोक्ता 'गणनिघंटे' तु पुरातनचिकित्सकैः ॥ २६४ ॥ कृष्णकातरकातुंडी 'कैयदेवे' स्मृता बुधैः । शिखंडिका काकणंती 'द्रव्यरत्नाकरे' स्मृता ॥ २६५ ॥ काकवीचर्यगारवल्ली प्रोक्ता 'भावप्रकाशके' । चक्रलाऽमरकोशे तु कविभिः परिकीर्तिता ॥ २६६ ॥ चूडामणी तु वन्या च तथा श्यामलचूडका । प्रोक्ता 'राजनिघंटे' तु कविभिः सप्तविंशतिः ॥ २६७ ॥

## ३८ श्वेतगुंजा ।

नामानि—श्वेतगुंजासिरिंदीका तद्वत्काकादनी तथा । काकपीलु वक्रशल्या प्रोक्ता 'राजनिघंटके' ॥ २६८ ॥ 'धन्वंतरिनिघंटे' तु प्रोक्ता शीतोच्चटा ध्रुवम् । श्वेतपाकी तु चूडाला दुर्भाषा चक्रिका तथा ॥ २६९ ॥ चूडा च वक्रशल्येति 'कैयदेवे' प्रकीर्तिता । चंडा तु दुर्मुखा चैव 'द्रव्यरत्नाकरे' स्मृता ॥ २७० ॥ ततो 'मदनपाले' तु दुर्मोका परिकीर्तिता । कालमंडी निरंटीवा प्रोक्ता 'गणनिघंटके' ॥ २७१ ॥ ततस्तु श्वेतकांभोजी 'राजनाम्नि' निघंटके । प्रोक्ताष्टादशसंख्याका भिषग्विद्याविशारदैः ॥ २७२ ॥

गुणाः—गुंजद्वयं तु तीक्ष्णोष्णं बीजं वांतिकरं तथा । पत्रंशूलविषे हंति वश्ये श्वेतं 'नृपे' स्मृतम् ॥२७३॥ वातपित्तज्वरे हंति मुखशोषश्रमापहम् । श्वासतृष्णामदान् हंति रक्तार्बुदविनाशनम् ॥२७४॥ 'भावप्रकाशे' संप्रोक्तं पुरातनभिषग्वरैः । रसे तिक्ता कषाया च कफपित्तापहारिणी ॥ २७५ ॥ चक्षुष्या शुक्रला केश्या रुक्षत्वग्बलदायिनी । इंद्रलुप्तहरा चैव मदमोहप्रहा तथा । रक्षोग्रहं विषं हन्ति कंडुकुष्ठव्रणापहम् । 'कृमिहृत्कैयदेवे' च संप्रोक्तं वैद्यनायकैः ॥२७६॥

## ३९ वृद्धदारु-विधारा ।

नामानि—अवेगी वृद्धदारू च तुंगको दीर्घतालुकः । वृद्धपुष्पी त्वजांत्री च तथैव छांगलांबिका ॥ २७७ ॥ जीर्णदारु जीर्णफजी सुपुष्पी त्वजरा तथा । सूक्ष्मपर्णा भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघंटुके' ॥ २७८ ॥ जंतुका चैव संप्रोक्ता 'धन्वंतरिनिघंटके' । 'द्रव्यरत्नाकरे' चैव जांगला परिकीर्तिता ॥ २७९ ॥ नागको जीर्णवालश्च अंतकोटरपुष्पिका । छागी चैव तु विख्याता तथा महिषवल्लरी ॥ २८० ॥ 'कैयदेवे' भिषक्श्रेष्ठैः प्रोच्यते नैव संशयः । छांगडी ऋक्षगंडीति प्रोक्ता 'भावप्रकाशके' ॥ २८१ ॥ अंतकोटरपुष्पी च तीरवालक एव च । एकत्रिंशतिसंख्याका भिषग्भिः कथिता भुवम् ॥ २८२ ॥

गुणाः—वृद्धदारु पिच्छिला च कफवातापहारिणी । बल्या कासामदोषघ्नी प्रोक्ता 'राजनिघंटके' ॥ २८३ ॥ रसायनं च शुक्रद्धिबलमेधाग्निवृद्धिकृत् ॥ २८४ ॥ स्वरकांतिकरं चैव सरः शोफामवातहृत् । वातमेहकफान् हंति प्रोक्तं 'कैयनिघंटके' ॥ २८५ ॥ वृद्धदारुद्वयं* तिक्तमुष्णं कटुसमीरितम् । श्वयथुकृमिमेदघ्नं वातोदरहरं 'धनौ' ॥ २८६ ॥ रक्तार्शनाशनं प्रोक्तं वैद्यै 'र्मदनपालके' ।

## ४० ताम्रवल्ली ।†

नामानि—कैवर्तिका सुरंगा च लतावली द्रुमारुहा ॥ २८७ ॥ रिंगिणी च सुभगा तदनंतरम् । ताली तमाली ताम्रा च ताम्रवल्ली तमालिका ॥ २८८ ॥ सूक्ष्मवल्ली सुलोमा च शोधनी मालिका तथा । द्विवन्हिसंख्यका प्रोक्ता भिषग्विद्याविशारदैः ॥ २८९ ॥

गुणाः—कैवर्ता लघुवृष्या च कषाया कफनाशिनी । मंदाग्निश्वासकासांश्च हंतीति 'राजनामके' ॥ २९० ॥

---

*इसीका एक और भेद है, जीर्णाफंजी, फांजी अथवा काली विधारा कहते हैं । इसका भी गुण विधाराके समान है ।

†ताम्रवल्ली चित्रकूटकी पहाड़ी तथा युक्तप्रदेशके अनेक स्थानोंमें होती है । किसी किसी निघण्टुमें कैवर्तिकाको इसका अलग भेद मान कर लिखा है कि कैवर्तिका नामसे मालवामें प्रसिद्ध है ।

## ४० कांडीरः-कांडवेल, हड़जोर ।

नामानि—कांडीरः कांडकटुकोः नासासंवेदनः पटुः । अग्रकांडस्तु यवल्ली कारवल्ली सुकांडकः ॥२६१॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः। धन्वंतरे, तूग्रकांडा कविभिः परिकीर्तिता ॥ २६२ ॥ कांडीरी तु कटिल्लश्च तथैव कांडवल्लिका । नासालिवेंदनश्चैव 'कैयदेवे' प्रकीर्तिता ॥ २६३ ॥ कांडवेदनकश्चैव प्रोक्ता 'गणनिघंटके' । पंचभूसंख्यका प्रोक्ता भिषक्श्रेष्ठैर्न संशयः ॥२६४॥

गुणाः—कांडीरः कटुतिक्तोष्णसरः प्रोक्तस्तथैव च । व्रणगुल्मोदरप्लीहशूललूतविनाशकृत् ॥ २६५ ॥ अग्निप्रदीपकः प्रोक्तो 'राजनामनिघंटके' । वातशूलहरश्चैव 'द्रव्यनामनिघंटके' ॥ २६६ ॥ कफपित्तकृमीकुष्ठान् हंतीति 'गणनामके' ।

## ४१ जंतुघा-उत्तरदेशे पद्मावती ।

नामानि—जंतुघा जंतुकारी च जननी चक्रवर्तिनी ॥ २६७ ॥ तिर्यक्फला निशांधा च बहुपत्री सुपत्रिका । राजवृक्षा जनेष्टा च कपिकच्छुफलोपमा ॥ २६८ ॥ रंजनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका । निर्ज्जूलिका कृष्णरुहा ग्रंथिपर्णी सुवल्लिका ॥ २६९ ॥ तरुवल्ली दीर्घफला प्रोक्ता 'राजनिघंटके' । सहर्षजन्तुकश्चैव प्रोक्ता धन्वंतरौ, ध्रुवम् ॥ ३०० ॥ जंतुकृष्णा तु संस्पर्शा तथैव जनरंजनी । जंतुघ्नी पर्पटी कृष्णा जंतुनी जंतुकं तथा ॥ ३०१ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः कथिता नैव संशयः । जनी 'मदनपाले' तु भिषग्भिः परिकीर्तिता ॥ ३०२ ॥ तथा 'भावप्रकाशे' च जन्तुका परिकीर्तिता । ततो 'गणनिघंटे' तु जन्तुकारः स्मृता बुधैः ॥ ३०३ ॥ संस्पर्शामरकोशे' तु चतुःस्त्रिंशतिसंख्यका ।

गुणाः—जन्तुघा शिशिरा तिक्ता रक्तपित्तकफापहा ॥ ३०४ ॥ दाहतृष्णाविषघ्नी च रुचिकृद्दीपनी 'नृपे' । तुवरा वर्णकृत् कण्डूकुष्ठव्रणविनाशिनी ॥ ३०५ ॥ पित्तोद्भवकफघ्नेति प्रोक्ता 'कैयनिघण्टके' ।*

*इसकी छाल कपड़ेमें रख छोड़नेसे कपड़ेमें कीड़ा नहीं लगता और न वह बिगड़ता है ।



## ४३ आम्लपर्णी-रामचना ।

नामानि—आम्लपर्णी च तीक्ष्णाम्ला कंटूला तदनन्तरम् ॥३०६॥ वल्ली करवटादिश्च वनस्था वल्लिसूरणा । अरण्यवासिनी चैव संप्रोक्ता 'राजनामके' ॥ ३०७ ॥ वसुसंख्या भिषक्श्रेष्ठैः प्रोच्यते भिषजां वरैः ।

गुणाः—अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलानिलापहा ॥ ३०८ ॥ रुच्या च दीपनी गुल्मश्लेष्मरोगापहा 'नृपे' ।

## ४४ शङ्खपुष्पी-शङ्खाहूली ।

नामानि—शङ्खपुष्पी तु शङ्खाह्वा सुपुष्पी कम्बुमालिनी ॥३०९॥ पीतपुष्पी कम्बुपुष्पो मेध्या मलविनाशिनी । किरीटी शङ्खकुसुमा शूलघ्ना शङ्खमालिनी ॥ ३१० ॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः । विलासिनी चिरीटी च प्रोक्ता 'धन्वन्तरौ' ध्रुवम् ॥ ३११ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता वनमालिनी । शङ्खनाम्नि स्मृतिहिता तथा वर्णविलासिनी ॥ ३१२ ॥ प्रोक्ता 'मदनपाले' तु भिषक्शास्त्रविशारदैः । मांगल्यकुसुमा चैव प्रोक्ता 'भावप्रकाशके' ॥ ३१३ ॥ एकोनविंशतिः प्रोक्ता संख्या चैव मनीषिभिः ।

गुणाः—शङ्खपुष्पी हिमा तिक्ता मेधाकृत् स्वरकारिणी ॥३१४॥ ग्रहभूतादिदोषघ्नी वशीकरणसिद्धिदा । प्रोक्ता 'राजनिघण्टे' च पुरातनभिषग्वरैः ॥ ३१५ ॥ आयुष्या मानसीव्याधिनाशिनी च कषायका । बलाग्निकान्तिकृत् कुष्ठनाशिनी 'भावनामके' ॥ ३१६ ॥ कटूष्णा च रसा चैव विषपित्तबलासहृत् । अपस्मारविनाशी च 'धन्वे' प्रोक्ता रसायनी ॥ ३१७ ॥ मेहक्रमिव्रणघ्नी च प्रोक्ता 'गणनिघण्टके' ।

## ४५ आवर्तकी-रक्त आहुली, तगरवल्ली ।*

नामानि—आवर्तकी तिन्दुकिनी विभांडी तु विषाणिका ॥ ३१८ ॥ रक्तपुष्पी रङ्गलता मनोज्ञा महदा तथा । जाली पति-

*इसके फूल लाल रङ्गके होते हैं ।

कला चैव चर्मरङ्गा तदुत्तरम् ॥ ३१६ ॥ वामावर्तेति कविभिः प्रोक्ता 'राजनिघण्टके' । लता महाजालिनी च 'कैयदेवे' प्रकीर्तिता ॥३२०॥ महाजालिनिका चैव प्रोक्ता 'मदनपालके'। 'द्रव्यरत्नाकरे' चैव प्रोक्ता वामविषाणिका ॥ ३२१ ॥

गुणाः—आवर्तकी कषायाम्ला शीतला पित्तहारिणी । प्रोक्ता 'राजनिघण्टे' च वैद्यविद्याविशारदैः ॥ ३२२ ॥ कुष्ठोर्ध्वदोषशमनी ह्यधोदोषविनाशिनी । कषाया शीतला वृष्या त्रिदोषशमनी तथा ॥ ३२३ ॥ अतिसारहरा प्रोक्ता 'धन्वन्तरिनिघण्टके' ।

## ४६ कर्णस्फोटा-कानफोड़ा ।*

नामानि—कर्णस्फोटा श्रुतिस्फोटा त्रिपुटा कृष्णतंडुला ॥३२४॥ चित्रपर्णी स्फोटलता चन्द्रिका त्वर्धचन्द्रिका । प्रोक्ता 'राजनिघण्टे' तु भिषग्भिस्सवसंख्यका ॥ ३२५ ॥

गुणाः—कर्णस्फोटा कटुस्तिक्ता हिमा च विषहा तथा । ग्रह-भूतहरा प्रोक्ता 'राजनामनिघण्टके' ॥ ३२६ ॥

## ४७ कटूवी-कटुकावल्ली, कटुकी ।

नामानि—कटूवी कटुकवल्ली च सुकाष्ठा काष्ठवल्लिका । महावल्ली सुवल्ली च पशुमोहनिका कटुः ॥ ३२७ ॥ प्रोक्ता 'राज-निघण्टे' तु भिषग्भिस्सवसंज्ञका ।

गुणाः—कटूवी तु मधुरा शीता सर्वज्वरहरा तथा ॥ ३२८ ॥ रुच्या च राजयक्ष्माहा प्रोक्ता 'राजनिघण्टके' ।

## ४८ अमृतस्रवा-अमृतवल्ली ।†

नामानि—वृक्षारुहामृतस्रावा तथैव तोयवल्लिका ॥ ३२९ ॥ घनवल्ली सितलता प्रोक्ता 'राजनिघण्टके' पञ्चसंख्या भिषक्-श्रेष्ठैरत्रैव परिकीर्तिता ॥ ३३० ॥

---

*इसकी वेलि महाराष्ट्रमें होती है। इसके पत्ते कोरदार कटे हुए होते हैं। इसका फल पटकनेसे आवाज़ होती है।

†चित्रकूटकी पहाड़ीमें होती है।

गुणाः—ईषत्तिक्ताऽमृतश्रावा तथैव च रसायनी । कमलाश्वयथूनाशा विषकुष्ठापहा 'नृपे' ॥ ३३१ ॥

## ४९ पुत्रदात्री–पुत्रदाई ।*

नामानि—वातारिर्पुत्रदात्री च भ्रमरी श्वेतपुष्पिका । वृतपत्रातिगन्धालुर्वैशिजाता सुवल्लरी ॥ ३३२ ॥ संप्रोक्ता वसुसंख्याका वैद्यैरत्रैव निश्चिता ।

गुणाः—पुत्रदात्री वातहन्त्री कटूष्णा कफहारिणी ॥ ३३३ ॥ वन्ध्यादोषहरा प्रोक्ता सुरभी 'राजनामके' ।

## पलाशी ।†

नामानि—पलाशी पत्रवल्ली च पर्णवल्ली तथैव च ॥ ३३४ ॥ सुरपर्णी सुपर्णी च दीर्घवल्ली विषादनी । अम्लपत्री दीर्घपत्री रसाम्ला तदनंतरम् ॥ ३३५ ॥ अम्ली अम्लातकी चैव कांजिका च पलाशिका । प्रोक्ता 'राजनिघंटे' तु चतुर्दशभिषग्वरैः ॥ ३३६ ॥

गुणाः—पलाशी मधुराम्ला च मुखदोषविनाशिनी । अरोचकहरा पथ्या पित्तकोपकरी 'नृपे' ॥ ३३७ ॥ इति सिद्धेश्वरकृतराघवविरचिते गुडूच्यादि-प्रथमवर्गः समाप्तः ।

# २ शताह्वादि वर्गः ।

## शताह्वा-सौंफ ।

नामानि—शताह्वा शतपुष्पा च मिशिर्घोषा तु पोतिका । अहिच्छत्रा सुवाक्पुष्पी माधवी कारवी शिफा ॥ ३३८ ॥ संघातपत्रिका छत्रा वज्रपुष्पा सुपुष्पिका । शतप्रसूना बहुला पुष्पाह्वा शतपत्रिका ॥ ३३९ ॥ वनपुष्पा भूरिपुष्पा सुगंधा सूक्ष्मपत्रिका । गंधाधिकातिछत्रा च प्रोक्ता 'राजनिघंटके' ॥ ३४० ॥ अवाक् पुष्पी घोषवती शफा च तदनंतरम् । मधुरा योनिदोषघ्नी मागधी च शटा तथा

*पुत्रदाई मालवा देशमें प्रसिद्ध है ।
†नागर देशमें प्रसिद्ध है ।

॥ ३४१ ॥ 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः । शफा शताह्वाऽवाक्पुष्पी चेटिका चेति मागधा ॥ ३४२ ॥ पणा 'मदनपाले' तु भिषग्भिः परिकीर्तिता । तथा संहतपत्री च शितछत्रा ततःपरम् ॥ ३४३ ॥ 'भावप्रकाशे' संप्रोक्ता भिषक्शास्त्रविशारदैः । अवाक्पुष्पा मधुरसा क्षेत्रा संहतपत्रिका ॥ ३४४ ॥ प्रोक्ता 'गणनिघंटे' तु चतुश्चत्वारिसंख्यका ।

गुणाः—शताह्वा कटु तिक्ता च स्निग्धा श्लेष्मातिसारजित् ॥ ३४५ ॥ ज्वरनेत्रव्रणप्लीहबस्तिहृद्'राजनामके' । श्लेष्मवातहराचोष्णा संप्रोक्ता 'धन्वनामके' ॥ ३४६ ॥ पित्तला कफपित्तघ्नी मेध्या च लघु दीपनी । शूलदाहवमीतृष्णागुल्मयोनिरुजां हरा ॥ ३४७ ॥ 'द्रव्यरत्नाकरे' चेयं भिषग्भिः परिकीर्तिता ।

## २ मिश्रेया-बड़ी सौंफ ।

नामानि—मिश्रेया तालपर्णी च तालपत्री मिशी तथा ॥३४८॥ शालेया च शीतशिवा शालिता वनजा तथा । अवाक्पुष्पी च मधुरी छत्रा संहतपुष्पिका ॥ ३४९ ॥ सुपुष्पा सुरसा वन्या प्रोक्ता 'राजनिघंटके' । बलशाली 'कैयदेवे' भिषग्लोकैः प्रकीर्तिता ॥ ३५० ॥ उवाक्पुष्पी च मागध्या मधुरा तदनंतरम् । शतकेति भिषक्श्रेष्ठैः 'द्रव्यरत्नाकरे' तथा ॥ ३५१ ॥ अहिछत्रा त्ववाक्पुष्पी माधवी पातिका शिफा । एषा षड्विंशसंख्याका प्रोक्ता 'भावप्रकाशके' ॥ ३५२ ॥

गुणाः—मधुरा कटुपाके च स्निग्धा कफविनाशिनी । वातपित्तहरा प्लीह जंतुहा 'राजनामके' ॥ ३५३ ॥ तिक्ता हिमा तु वृष्या च दुर्नामा क्षयहारिणी । क्षतक्षीणहरा वल्या वातपित्तास्रहा 'धने' ॥ ३५४ ॥ रसे तीक्ष्णा लघुश्चैव वन्हिकृच्चोष्णदा बला । रुक्षा हृद्या विट्कृमिहा शुक्रहानिलहारका ॥ ३५५ ॥ 'कैयदेवे' निघंटे तु भिषक्श्रेष्ठैः प्रकीर्तिता । 'द्रव्यरत्नाकरे' प्रोक्ता भिषग्भिर्योनिशूल हृत् ॥ ३५६ ॥

## ३ शालिपर्णी-सरिवन ।

नामानि—सदला छालपर्णी च स्थिरा चैव सुपुत्रिका । कुमुदा चैव सौम्या च गुहा चैव तथा ध्रुवा ॥ ३५७ ॥ विदारिगन्धांशुमती दीर्घमूला सुपर्णिला । वातघ्नी पित्तली तन्त्री सुधा सर्वानुकारिणी

॥ ३५८ ॥ शोफघ्नी सुभगा देवी निश्चला व्रीहिवर्णिका । सुमूला तु सुरूपा च सुपत्रा शुभपत्रिका ॥ ३५६ ॥ शालिपर्णी शालिदला दीर्घपत्रेति 'राजके' । त्रिवर्ण्यऽतिगुहा चैव महाक्रीजनका तथा ॥ ३६० ॥ पीतिनीति भिषक्श्रेष्ठैः प्रोक्ता 'धन्वंतरौ' ध्रुवम् । ततस्त्वतिरुहा चैव महाक्रीतनका तथा ॥ ३६१ ॥ श्रीपर्णिका तु श्रीपर्णी 'कैयदेवे' प्रकीर्तिता । तथा 'मदनपाले' तु त्रिपर्णीति प्रकीर्तिता ॥ ३६२ ॥ दीर्घांघ्रिः पीवरा चैव प्रोक्ता 'भावप्रकाशके' । ध्रुवपर्णी त्वतिगुहा महाक्रीतनिका 'गणे' ॥ ३६३ ॥ 'कैयदेवनिघंटे' तु पर्णी चैव प्रकीर्तिता । चत्वारिंशत् चतुश्चैव संख्या प्रोक्ता मनीषिभिः ॥३६४॥

गुणाः—शालिपर्णी रसे तिक्ता गुरूष्णा वातहा तथा । विषमज्वरमेहार्शशोकसंतापहा नृपे ॥ ३६५ ॥ गरच्छर्दिहरा प्रोक्ता वैद्यैः 'भावप्रकाशके' । लघुश्वासहरा भेदी पित्तवाततृषापहा ॥ ३६६ ॥ कासदाहहरा प्रोक्ता 'धन्वंतरिनिघंटके' । स्वादुवृष्या बृंहणी तु तथैव च रसायनी ॥ ३६७ ॥ विषश्वासात्रिदोषघ्नी कृमीमेहविनाशिनी । क्षतकासातिसारघ्नी प्रोक्ता 'कैयनिघंटके' ॥ ३६८ ॥

## ४ समष्ठीला-काकुंवा, नद्याभ्र ।

नामानि—गंडीरा तु समष्ठीला नद्याभ्रात्वभ्रगंधिकृत् । कोशफला च कोशाम्र उपदंशे (?) तु 'राजके' ॥ ३६९ ॥ काकाभ्रा कंटकिफला 'द्रव्यरत्नाकरे' स्मृता ।

गुणाः—समष्ठीला कटूष्णा च रुच्या मुखविशोधना ॥ ३७० ॥ दाहकृत्कफवातघ्नी दीपना 'राजनामके' ।

## ५ बृहती–बड़ीकटाई ।

नामानि—बृहती महती कांता वार्ताकी सिंहिका कुली ॥ ३७१ ॥ राष्ट्रिका स्थूलकंटा च चंडाकी तु महोटिका । बहुपुत्री कंटतनुः कंटालुः कटुकला तथा ॥ ३७२ ॥ डोरली वरवृंताकी प्रोक्ता 'राजनिघंटके' । कांता तु राष्ट्रकी चैव विशदा च महोटिका ॥ ३७३ ॥ 'धन्वंतरिनिघंटे' च भिषक्श्रेष्ठैः प्रकीर्तिता । कटुकी कंटकी चैव भंटाकी च विधावका ॥ ३७४ ॥ स्थलभंटाकिनी चैव 'कैयदेवे' प्रकीर्तिता । हिंगुली दुष्प्रधर्षा च प्रोक्ता

'भावप्रकाशके' ॥ ३७५ ॥ महावार्ताकिनी चैव प्रोक्ता 'गणनिघंटके'। अष्टाविंशतिसंख्याका प्रोक्ता पूर्वचिकित्सकैः ॥ ३७६ ॥

गुणाः—बृहती कटुतिक्तोष्णा वातज्वरहरा तथा । कासश्वासरुचिहरा हृद्रोगामहरा 'नृपे' ॥ ३७७ ॥ ग्राहिणी पाचिनी प्रोक्ता 'धन्वंतरिनिघंटके'। कफश्लेष्महरा हृद्या दीपनी कुष्ठहा तथा ॥ ३७८ ॥ आस्योद्भवमलघ्नी च शूलहा 'कैयदेवके'। कफघातहरा प्रोक्ता 'द्रव्यनामनिघंटके' ॥ ३७९ ॥

## ६ पीततंडुला-मोतरिंगणी ।

नामानि—ततः सर्पतनुश्चैव क्षविका पीततंडुला । पुत्रप्रदा बहुफला गोधिनी तदनंतरम् ॥ ३८० ॥

गुणाः—क्षविका बृहती तिक्ता कटुरुष्णा च तत्समा । धारास्तंभकरा प्रोक्ता 'राजनामनिघंटके' ॥ ३८१ ॥

## ७ श्वेतबृहती ।

नामानि—ततस्तु श्वेतबृहती श्वेतवार्ताकिनी तथा । श्वेतसिंही श्वेतफला तथा श्वेतमहोटिका ॥ ३८२ ॥ प्रोक्ता 'राजनिघंटे' तु रुद्रसंख्या भिषक्जनैः ।

गुणाः—वातश्लेष्महरा रुच्या नानानेत्ररुजापहा ॥ ३८३ ॥

## ८ कण्टकारी-भटकटैया ।

नामानि—कंटकारी कंटकिनी दुस्पर्शादुःप्रहर्षिणी । क्षुद्रा व्याघ्री निदिग्धा च द्रविणी क्षुद्रकण्टका ॥ ३८४ बहुकण्टा क्षुद्रकण्टा तथा कण्टालिका मता । ततः क्षुद्रफला चैव प्रोक्ता 'राजनिघंटके' ॥ ३८५ ॥ 'धन्वंतरौ' धावनीति 'कैयदेवे' प्रचोदनी । बहुगूडाकुली चैव वार्ताकी तदनंतरम् ॥ ३८६ ॥ स्पृशी च राष्ट्रिकी चैव प्रोक्ता 'त्वमरकोशके'।

गुणाः—कंटकारी कटूष्णा च दीपनी श्वासकासहा ॥ ३८७ ॥ प्रतिश्यायश्लेष्मवातज्वरहा 'राजनामके'। आमवातारुचिहरा कासहृद्रोगहा 'धने' ॥ ३८८ ॥ तिक्ता रुक्षा भेदिनी च पाचनी पार्श्वरोगजित् । कृच्छ्रपीनसहंत्री च मलपाके कटूष्णका ॥ ३८९ ॥

फलगुणाः—भेदनं रोचनं हृद्यं तिक्तं पिताग्निकृत्तया । श्लेष्मवायुकंडुकासमेहकृमिज्वरापहा ॥ ३६० ॥ 'केयदेवे' भिषक्श्रेष्ठैः 'द्रव्ये' चैव सरा स्मृता । आस्यवैरस्यहंत्री च ग्राही कुष्टविनाशिनी ॥ ३६१ ॥ शूलाग्निमांद्यहा प्रोक्ता वैद्यै 'भावप्रकाशके' ।

## ९ लक्ष्मणा ।

नामानि—क्षेत्रदूती तु श्वेता च लक्ष्मणा सितसिंहिका ॥ ३६२ ॥ सितक्षुद्र सिता छिन्न क्षुद्रवार्ताकिनी तथा । कटुवार्ताकिनी चैव क्षेत्रजा कपटेश्वरी ॥ ३६३ ॥ निस्नेहफलिका रामा सितकंटा महौषधी । गर्दभी चंद्रिका चांद्रि चंद्रपुष्पा प्रियंकरी ॥ ३६४ ॥ नाकुली दुर्लभा रास्ना प्रोक्ता 'राजनिघंटके' । कासघ्नी क्षुद्रमाता च किण्वा तु कपटा तथा ॥ ३६५ ॥ मलिना मलिनांगी च क्लिन्नदूती लतांगिनी । बहुवामा महर्षीका कुमती तदनंतरम् ॥ ३६६ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । चंद्रपुष्पी तु वनजा धूर्ता च दूतिका तथा ॥ ३६७ ॥ श्वेतलक्ष्मा 'केयदेवे' भिषग्भिः परिकीर्तिता । चंद्रहासेति मुनिभिः प्रोक्ता 'मदनपालके' ॥ ३६८ ॥ गर्भदा चंद्रभा चंद्रा प्रोक्ता 'भावप्रकाशके' । चत्वारिंशत्त्रयश्चैव संख्या प्रोक्ता भिषग्जनैः ॥ ३६९ ॥

गुणाः—श्वेता तु कंटकारी च रुच्योष्णा कफवातजित् । चक्षुष्या दीपनी प्रोक्ता तथा रसनियामिका ॥ ४०० ॥ 'राजनामनिघंटे' च 'द्रव्ये' स्याद्गर्भकारिणी । पार्श्वपीडाहरा चैव सरा 'भावप्रकाशके' ॥ ४०१ ॥ तत्रैव तत्फलगुणः शुक्ररेचनमित्यपि ।

## १० पृष्ठिपर्णी–पिठवन ।

नामानि—कलशी पृश्निपर्णी च तथैव च महागुहा ॥ ४०२ ॥ शृगालविन्ना धमनी मेखला लांगुली गुहा । क्रोष्टुपुच्छी च शृङ्गाली सिंहपुच्छी तथैव च ॥ ४०३ ॥ पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला । चित्रपर्ण्युपचित्रा च श्वपुच्छा तदनन्तरम् ॥ ४०४ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । अंघ्री शृगालविन्ना च बलापर्णी तु क्रोष्टुका ॥ ४०५ ॥ कपित्थका धावनीति 'धन्वन्तरिनिघंटके' । क्लीतनी धातनी चैव स्निग्धपर्णी तथैव च ॥ ४०६ ॥ 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः । शृगालवृक्षा जटिला

प्रोक्ता 'मदनपालके' ॥ ४०७ ॥ अंघ्रिपर्णी क्रोष्टुविन्ना प्रोक्ता 'भावप्रकाशके' । शृगालविन्न्या पर्णी तु तथैव क्रोष्टुपुच्छिका ॥ ४०८ ॥ प्रोक्ता 'गणनिघंटे' तु वेदवन्हिहभिधा ध्रुवम् ।

गुणाः—पृष्ठिपर्णी कटूष्णाम्ला तिक्ता कासातिसारजित् ॥ ४०९ ॥ वातज्वरव्रणोन्माददाहहा 'राजनामके' । रक्तपित्तहरा रूक्षा हिक्काहा 'गणनामके' ॥ ४१० ॥ त्रिदोषज्वरकासघ्नी 'द्रव्यरत्ने' प्रकीर्तिता । रक्तातिसारहन्त्री च लघु वृष्या तृषापहा ॥४११॥ दाहवान्तिहरा प्रोक्ता वैद्यै 'र्मदनपालके' । 'भावप्रकाशे' संप्रोक्ता वृष्या च मधुरा रसा ॥ ४१२ ॥ श्वासहन्त्रीति विज्ञेया वैद्यैर्विद्याविशारदैः ।

## ११ गोक्षूरक—बड़ा गोखरू ।

नामानि—गोक्षूरको गोक्षुरकः क्षुरांगश्च श्वदंष्ट्रकः ॥ ४१३ ॥ कंटकी भद्रकंटश्च व्यालदंष्ट्र क्षुरस्तथा । ततश्च क्रमशश्चैव दुश्चक्रममहांगकौ ॥ ४१४ ॥ प्रोक्ता 'राजनिघंटे' च रुद्रसंख्या भिषग्जनैः ।

## १२ वनशृङ्गाटक—छोटे गोखरू ।

नामानि—ततो गोक्षुरकश्चैव तथा कंटी त्रिकंटकः ॥ ४१५ ॥ षडङ्गो बहुकंटश्च क्षुरो गोकंटकस्तथा । पलंकषा कंटफलस्तनु क्षुद्रक्षुरस्तथा । ॥ ४१६ ॥ तथैव भक्षकंटश्च चणकद्रुम एव च । स्थूलशृङ्गाटकश्चैव वनशृङ्गाटकस्तथा ॥ ४१७ ॥ इक्षुगन्धः स्वादुकंटः प्रोक्तो 'राजनिघंटके' । भक्षको मधुरश्चैव श्वदंष्ट्रस्त्रिक एव च ॥४१८॥ व्यालदंष्ट्रो भिषक्श्रेष्ठैः प्रोक्तो 'धन्वन्तरौ' ध्रुवम् । गोक्षुरः स्थलशृङ्गाट 'कैयदेवे' प्रकीर्तितौ ॥ ४१९ ॥ इक्षुगन्धो भिषक्श्रेष्ठैः प्रोक्ता 'भावप्रकाशके' ।

गुणाः—गोक्षुरौ* शीतलौ प्रोक्तौ मधुरौ बृंहणौ बले ॥ ४२० ॥ कृच्छ्राश्मरीमेहदाहनाशकौ च रसायनौ । 'द्रव्यरत्नाकरे' वैद्यैर्वातजित् परिकीर्तितः ॥ ४२१ ॥ 'भावप्रकाशे' संप्रोक्तावर्शघ्नाविति निश्चयम् ! शूलहृद्रोगजित् वृष्या 'धन्व' नामनिघंटके ॥ ४२२ ॥

*गोक्षुरस्य द्वौ भेदौ वर्तते, तस्मात् अत्र द्विवचनं कृतम् । द्वयोर्भेदयोरपि साधारणतः समानगुणधर्माः सन्ति । वने भवः ग्रामे भवश्च ( स्थलशृङ्गाटकः ) इति द्वौ भेदौ ।

पुष्टिप्रदौ दीपनौ च बस्तिवातहरौ तथा । त्रिदोषश्वासकासघ्नौ 'केये' प्रोक्ता भिषग्वरैः ॥ ४२३ ॥

## १३ यवासा—जवासा, लाल धमासा ।

नामानि—"यासो यवासो बहुकण्टकश्च खरस्तथा छालदलस्तथैव" । दूरमूलस्त्वनन्ता च विषकण्टक एव च ॥ ४२४ ॥ तीक्ष्णकंठः समुद्रान्ता दीर्घमूलो मरुद्भवा । सूक्ष्मपत्रो विषघ्नश्च कंटालुस्तदनन्तरम् ॥ ४२५ ॥ त्रिकंटकश्च गन्धारी प्रोक्ता 'राजनिघंटके' । 'धन्वन्तरिनिघंटे' तु प्रोक्तो बालकपत्रकः ॥ ४२६ ॥ कटुसा ताम्रमूली च तथा धन्वयवासकः । 'केयदेवे' भिषक्श्रेष्ठैः कथितो नैव संशयः ॥ ४२७ ॥ कुनाशकः कषायश्च दूरविग्रह एव च । प्रोक्तो 'भावप्रकाशे' च भिषग्विद्याविशारदैः ॥४२८॥ बलिपत्रो भिषक्श्रेष्ठैः प्रोक्तो 'गणनिघंटके' । त्रिंशत्संख्या समाख्यातो भिषक्शास्त्रविशारदैः ॥ ४२९ ॥

गुणाः—यासो मधुर तिक्तोसौ शीतपित्तार्तिदाहजित् । बलदीपनकृत् तृष्णा कफछर्दिविसर्पजित् ॥४३०॥ प्रोक्तो 'राजनिघंटे' च 'भावे' मेदविनाशनः । रक्तपित्तज्वरहरो प्रोक्तो 'धन्वनिघंटके' ॥ ४३१ ॥ कषायश्च हिमश्चैव कफमेहमदापहा । भ्रमकुष्ठविसर्पघ्ना कासवातासृगापहा ॥ ४३२ ॥ 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः । वातपित्तकफासृघ्नो 'गणे' प्रोक्ता भिषक्जनैः ॥ ४३३ ॥

## १४ वासकः-रूसा ।

नामानि—वासकः सिंहिका वासा भिषङ्माता वसादनी । अटरूषः सिंहमुखी सिंही कंठीरवीवृषा ॥ ४३४ ॥ शितकर्णी वाजिदन्ता नासा पंचमुखी तथा । सिंहपर्णी मृगेन्द्राणी प्रोक्ता 'राजनिघंटके' ॥४३५॥ सिंहास्या शितवल्ली च मातृका सिंहवल्लभा । वाजिदंतो भिषक्श्रेष्ठैः 'केयदेवे' प्रकीर्तिता ॥ ४३६ ॥ सिंहकश्च महद्वैद्यैः प्रोक्तो 'गणनिघंटके' । सिंही 'त्वमरकोशे' च त्रयोविंशतिसंख्यकाः ॥ ४३७ ॥

गुणाः—वासा तिक्ता कटुः शीता कामला रक्तपित्तहा । कफज्वरक्षयश्वासनाशनी 'राजनामके' ॥ ४३८ ॥ ऊर्ध्वासृक्पित्तहंत्रीति 'गणे' प्रोक्ता चिकित्सकैः । हृच्छर्दिकुष्ठहंत्री च तृषाहा 'धन्वनामके'

॥ ४३९ ॥ ज्वरमेहारुचिघ्नो च वातला कफनाशिनी । 'केयदेवे' भिषक्श्रेष्ठै 'र्द्रव्ये' मेहविनाशिनी ॥ ४४० ॥

## १५ शितिवार-सिरियारी ।*

नामानि—शितिवारः शितवरः सूच्यान्हः सूचिपत्रकः । श्रीघारकः शिखी बभ्रुः स्वस्तिकः सुनिषण्णकः ॥ ४४१ ॥ सूचीदला कुरूटश्च ततः श्वेतावरस्तथा । मेधाकृत् ग्राहकश्चैव कुकुटस्तदनंतरम् ॥ ४४२ ॥ प्रोक्तो 'राजनिघंटे' तु भिषक्शास्त्रविचक्षणैः । शीतिवारः सुनिषण्णस्तद्वत्सीवारको घनौ ॥ ४४३ ॥ कुरंटिका क्षेत्रभूषा कुरंटी शीर्षमंजरी । श्रीहस्तिनी सिंहकेशी चुवकः क्षेत्रनाशिनी ॥ ४४४ ॥ कृष्णसूक्ष्मपुला चैव 'केयदेवे' प्रकीर्तिता । भूरुण्डी हस्तिनी चैव श्वेतवारक एव तु ॥ ४४५ ॥ 'द्रव्यरत्नाकरे' चैव प्रोक्ता पूर्वचिकित्सकैः । पूर्णाकश्च भिषक्श्रेष्ठैः प्रोक्तो 'भावप्रकाशके' ॥ ४४६ ॥ एकत्रिंशत्संख्यका च प्रोक्तेषा भिषजां वरैः ।

गुणाः—शितिवारा च संग्राही कषायोष्णा त्रिदोषनुत् ॥ ४४७ ॥ मेधारुचिज्वरहरा दाहहा 'राजनामके' । रुक्षा वृष्या गुरुश्चैव तथा मारुतपित्तकृत् ॥ ४४८ ॥ विषश्वयथुनाशा च बस्तिवातहरा तथा । कृच्छ्राश्मकफवातघ्नो प्रोक्ता 'केयनिघण्टके' ॥ ४४९ ॥ 'द्रव्ये' तु कफवातघ्नी वन्हिकृच्च सरा स्मृता ।

## १६ क्षुद्रदुरालभा—छोटा धमासा ।

नामानि—करभा दनिका चैव तथैव करभप्रिया ॥ ४५० ॥ ग्राहिणी फणिहृत् चैव कषाया चोष्ट्रभक्षिका । अजादन्यजभक्षा च तथैव च विशारदा ॥ ४५१ ॥ कच्छुराफणिहारी च सूक्ष्मपत्रा मरुद्भवा । विरूपा मरुजा जाता कषायी 'गणनामके' ॥ ४५२ ॥ एकोनविंशतिः प्रोक्ता पुरातनचिकित्सकैः ।

गुणाः—क्षुद्रा दुरालभा चाम्ला ज्वरकुष्ठविनाशिनी ॥ ४५३ ॥ श्वासकासभ्रमघ्नो च तथा पारदशुद्धिदा ।

---

*इसका शाक होता है, बड़ा होने पर इसकी पेड़में एक सफेद तुर्रा निकलता है उसे सुनगा या गंड़ाम और महाराष्ट्र देशमें कोंबड़ा कहते हैं। ऐसे तुर्रावाले कुरडूको देवकुरडू कहते हैं।

## १७ दुरालभा-धमासा ।

नामानि—धन्वयासो दुरालंभा ताम्रमूला च कच्छुरा ॥ ४५४ ॥ दुरालंभा च दुःस्पर्शा धन्वी धन्वयवासका । प्रबोधनी सूक्ष्मदला विरूपा दूरविग्रहा ॥ ४५५ ॥ दुर्लभा दुःप्रधर्षी च प्रोक्ता 'राजनिघंटके'। यासा तु कष्टरा चैव प्रोक्ता 'धन्वंतरौ' ध्रुवं ॥ ४५६ ॥ तथा 'मदनपाले' तु यासकेति स्मृता बुधैः । भासा 'गणनिघंटे' च प्रोक्ता त्वष्टादशैव तु ॥ ४५७ ॥

गुणाः—दुरालभा कटुस्तिक्ता वातपित्तज्वरापहा । उष्णा गुल्मप्रमेहघ्नी प्रोक्ता 'राजनिघंटके' ॥ ४५८ ॥

## १८ अग्निदमनी-अगिनी धमासा ।

नामानि—ततोऽग्निदमनी चैव बहुकंटा तथैव च । वल्लिकंटारिका चैव तद्वत् गुच्छफला तथा ॥ ४५९ ॥ ततः क्षुद्रफला चैव क्षुद्रकंटारिका तथा । तथैव क्षुद्रदुःस्पर्शा दमनी तदनन्तरम् ॥ ४६० ॥ मलेंद्रमाता विदिता प्रोक्ता 'राजनिघण्टके' । दशसंख्या भिषग्भिस्तु प्रोच्यते नैव संशयः ॥ ४६१ ॥

गुणाः—अथाग्निदमनी कट्वी चोष्णा रुक्षा तथैव च । रुच्या वातकफघ्नी च हृद्या च दीपनी तथा ॥ ४६२ ॥ गुल्मप्लीहहरा प्रोक्ता 'राजनामनिघंटके' ।

## १९ बाकुची-बावची ।

नामानि—बाकुची सोमराजी च सोमवल्ली सुवल्लिका ॥४६३॥ सिता सितावरी चैव चंद्ररेखा च चंद्रिका । सुप्रभा कुष्ठहंत्री च कांभोजी पूतिगंधिका ॥ ४६४ ॥ अवल्गुजा चांद्रसंज्ञा राजी च तदनंतरम् ॥ ऐन्दवी कालमेषी च त्वग्दोषघ्नी तथैव तु ॥ ४६५ ॥ ततः कृष्णफला चैव वल्गुजा च प्रभा तथा । बाकुटी चैव विदिता 'राजनामनिघंटके' ॥ ४६६ ॥ पूतिफला चंद्रलेखा प्रोक्ता 'धन्वंतरौ' ध्रुवं । ततस्तु चंद्रशकला चंडरी चंद्रिका तथा ॥ ४६७ ॥ जीवना मलयू चैव इंदुराट् कालमेषिका । सोलखंडा सुवल्लीका 'केवदेवे' प्रकीर्तिता ॥ ४६८ ॥ तथा 'मदनपाले' तु वरा प्रोक्ता मनीषिभिः । अहिद्रुरो कुष्ठहरिः प्रोक्ता 'गणनिघण्टके' ॥ ४६९ ॥ चत्वारिंशत् संख्यकेति संप्रोक्ता भिषजां वरैः ।

गुणाः—वाकुची कटु तिक्तोष्णा कृमिकुष्ठ कफापहा ॥४७०॥ प्रोक्ता 'राजनिघण्टे' च वैद्यविद्याविचक्षणैः। तत्फलं पित्तलं कुष्ठकफानिलहरं कटु ॥ ४७१ ॥ 'कैयदेवे' 'भिषक् श्रेष्ठैः' संप्रोक्तं नैव संशयः। 'द्रव्यरत्नाकरे' प्रोक्तं वायुजन्तुविनाशकृत् ॥ ४७२ ॥ तत्फलं श्वेतकुष्ठघ्नं कफवातहरं 'गणे'। केश्यं शोथामपांडुघ्नं फलं 'भावप्रकाशके' ॥ ४७३ ॥ त्वग्दोषविषकंडूघ्नं खर्जुनाशकरं स्मृतं। 'धन्वन्तरिनिघण्टे' च व्रणहन्तं प्रकीर्तितं ॥ ४७४ ॥ दीपनी मधुरा रुक्षा रुच्या हृद्या तथैव च। विष्टंभी च सरा मेध्या रक्तपित्तकफापहा ॥ ४७५ ॥ श्वासकासकृमीमेह*ज्वरहन्त्रीति 'कैयके'।

## २० शणपुष्पी-सनई।

नामानि—शणपुष्पी बृहत्पुष्पी शणिका शवघंटिका ॥ ४७६ ॥ पीतपुष्पी स्थूलफला लोमशा माल्यपुष्पिका। प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः ॥ ४७७ ॥ महाशणा वामनी च तथैव कटुतिक्तका। 'धन्वंतरिनिघंटे, तु संप्रोक्ता भिषजांवरैः ॥ ४७८ ॥ घंटारवाल्मघंटीका घंटा शवरपुष्पिका। 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ४७९ ॥ 'द्रव्यरत्नाकरे' चैव त्वल्पी प्रोक्ता मनीषिभिः। धावनी स्वल्पघंटा च पुष्पीका 'मदने' स्मृता ॥ ४८० ॥ घंटा तु रणघंटेति प्रोक्ता 'भावप्रकाशके'। एकविंशतिसंख्याका संप्रोक्ता भिषजां वरैः ॥ ४८१ ॥

गुणाः—शणपुष्पी रसे तिक्ता कषाया कफवातजित्। अजीर्णज्वरहंत्री च वमनी रक्तदोषनुत् ॥ ४८२ ॥ 'राजनामनिघंटे' च मिषग्भिः परिकीर्तिता। त्रिदोषहा 'द्रव्यरत्ने' संप्रोक्ता भिषजां वरैः ॥ ४८३ ॥ वातघ्नी कंठहृद्रोगमुखरोगहरा 'धने'। कफपित्तहरा प्रोक्ता 'कैयदेवनिघंटके' ॥ ४८४ ॥

## २१ लघुशणपुष्पी-छोटी सनई।

नामानि—सूक्ष्मपुष्पी तु क्षुद्रा च शणपुष्पी च विष्टिका। सूक्ष्मपर्णी सूक्ष्मघण्टी बाणाह्वा रससंज्ञका ॥ ४८५ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः।

---

*बाह्याभ्यंतर—कृमीणां नाशका इति हेतोः द्विवचनं वा ?

गुणाः—शणपुष्पी क्षुद्रतिक्ता वम्यां रसनियामिका ॥ ४८६ ॥

## २२ श्वेतशणपुष्पी-सफेद सनई ।

नामानि—वृत्तपर्णी श्वेतपुष्पी महासीता तथैव च । श्वेतघण्टी महापूर्वा तथैव शणपुष्पिका ॥ ४८७ ॥ महा श्वेतेति मुनिभिः प्रोक्ता षट् 'राजनामके' ।

गुणाः—महाश्वेता कषायोष्णा शस्ता रसनियामिका ॥ ४८८ ॥ कुतूहलेषु च प्रोक्ता मोहनस्तंभनादिषु ।

## २३ शरपुंखा-सिलफोंका ।

नामानि—शरपुंखा कांडपुंखा वाणपुंखेंदुपुष्पिका ॥ ४८९ ॥ तथा शायकपुंखाऽह्वा प्रोक्ता 'राजनिघंटके' ।

## २४ श्वेतशरपुंखा-सफेद सिलफोंका ।

नामानि—श्वेताद्या चैव विख्याता तथैव सितसायका ॥ ४९०॥ श्वेतपुंखा शुभ्रपुंखा प्रोक्ता 'राजनिघंटके' ।

गुणाः—शरपुंखा कटूष्णा च कृमिवातहरा 'नृपे' । श्वेता रसायनी प्रोक्ता कंटपुंखा तु शूलहा ॥ ४९१ ॥

## २५ कंटकशरपुंखा ।

नामानि—कंटपुंखा तु कंटालुस्तथैव कंटपुंखिका । वन्हिसंख्या भिषग्भिस्तु प्रोक्ता 'राजनिघण्टके' ॥ ४९१ ॥

## २६ शण-सन ।

नामानि—शणस्तु माल्यपुष्पः स्यात् वमनः कटुतिक्तकः । निशाचरो दीर्घशाखत्वकसारो दीर्घपल्लवः ॥ ४९३ ॥ प्रोक्ता 'राजनिघण्टे' तु वसुसंख्या भिषक्जनैः ।

गुणाः—शणस्त्वम्लः कषायश्च मलपातं च कारयेत् ॥ ४९४ ॥ गर्भपातप्रदश्चैव वांतिकृच्चामपातकृत् । वातोद्भवकफान्हंति 'नृपे' प्रोक्तोंगमर्दहा ॥ ४९५ ॥

## २७ अंबष्ठा-अम्बाडी, पटुवा, जूट ।

नामानि—अम्बष्ठा चैव अवांडी वाला तद्वत् शरालका । अम्बष्ठिकाविकाह्वा माचिका दृढवल्कला ॥ ४९६ ॥ मयूरिका गंधपत्री चित्रपुष्पी तथैव तु । मुखमाचीछिन्नपत्री विज्ञेया भूरिमल्लिका ॥ ४९७ ॥ प्रोक्ता 'राजनिघंटे' तु पुरातनभिषग्वरैः । विजालिका तु संप्रोक्ता 'धन्वंतरिनिघंटके' ॥ ४९८ ॥ चक्रकला भूमिमूली मसूरविदला तथा । प्रोक्ता 'गणनिघंटे' तु वैद्यविद्याविशारदैः ॥ ४९९ ॥ द्वयष्ठका बहुमूला च तद्वद्दंतशला तथा । सूचीमुखा सहस्री च मधुपर्णी तथैव च ॥ ५०० ॥ कौशिकाभा च सुरता विदुला 'कैयदेवके' । शाची दन्तवटा चैव 'द्रव्यरत्नाकरे' स्मृता ॥५०१॥ अम्बष्ठका कषाया च विख्याता शकटामुखी । प्रोक्ता 'मदनपाले' तु पुरातनभिषग्वरैः ॥ ५०२ ॥ प्रस्थिका चैव केशी च मयूरविदला तथा । बालमूली भिषग्भिस्तु प्रोक्ता 'भावप्रकाशके' ॥ ५०३ ॥ प्रोक्तैषा भिषजां श्रेष्ठैरष्टत्रिंशतिसंख्यका ।

गुणाः—अथांबष्ठा कषायाम्ला कफकण्ठरुजापहा ॥ ५०४ ॥ बलासवातहा चैव रुचिकृद्दीपनी 'नृपे' । शीतातिसारहा प्रोक्ता 'कैयदेवनिघंटके' ॥ ५०५ ॥ 'द्रव्यरत्नाकरे' वैद्यैः पित्तजित् परिकीर्तिता । 'धने' पक्वातिसारघ्नी 'गणे' रक्तातिसारजित् ॥ ५०६ ॥

## २८ नीली-नील ।

नामानि—नीली नीला नीलिनी च नीलपत्री तथैव च । तुत्था राज्ञी नीलिका च नीलपुष्पी च कालिका ॥ ५०७ ॥ श्यामा तु शोधनी चैव ग्राम्या भद्रा च श्रीफला । भारवाही च मोचा च कृष्णा व्यञ्जनकेशिका ॥ ५०८ ॥ महाफला सिता चैव रंजनी क्लीतनी तथा । नीलकेशी चारटीका गन्धपुष्पा च श्यामली ॥ ५०९ ॥ महाबला गन्धपत्री स्थिररङ्गा तथैव च । रङ्गपुष्पीति विख्याता प्रोक्ता 'राजनिघंटके' ॥ ५१० ॥ तूणी विशोधनी चैव मे(मा?)ली च भारवाहिका । 'धन्वन्तरिनिघण्टे' तु प्रोक्ता पूर्वचिकित्सकैः ॥ ५११ ॥ कालिन्दोला तु रूढा च सारटा 'कैयदेवके' । दोला तुच्छा ग्रामिणी च मधुपर्णी तथैव च ॥ ५१२ ॥ तिलपुष्पा कालकेशी प्रोक्ता 'भाव-

प्रकाशके' । द्रोणी तु क्रीतकीका च संप्रोक्ताऽ'मरकोशके' ॥ ५१३ ॥ एकत्रिंशतसंख्यकेति संप्रोक्ता भिषजां वरैः ।

गुणाः—नीली तु कटुतीक्ष्णोष्णा केश्य कासकफापहा ॥ ५१४॥ आमवातविषघ्नी च गुल्मोदरकृमीहरा । ज्वरघ्नीति 'नृपे' प्रोक्ता पुरातनचिकित्सकैः ॥ ५१५ ॥ सरा कुष्ठार्शहन्त्री च गंडमालार्बुदघ्निका । 'द्रव्यरत्नाकरे' प्रोक्ता वैद्यविद्याविचक्षणैः ॥ ५१६ ॥ हृद्रोगवातगुल्मघ्नी प्लीहहा 'धन्वनामके' । रसे पाके तु तिक्ता च कृच्छ्रमेहविनाशिनी ॥ ५१७ ॥ कफानिलहरा चैव वातरक्तहरा तथा । उदावर्तामवातघ्नी गरहा 'कैयदेवके' ॥ ५१८ ॥ मोहभ्रमत्रिदोषघ्नी प्रोक्ता 'मदनपालके' । वातोद्भवकफघ्नी च रेचिनी 'भावनामके' ॥ ५१९ ॥

## २९ महानीली—बड़ी नील ।

नामानि—महानील्यमला चैव तुत्था श्रीफलिका तथा । राजनीली तु मेला च केशार्हा भृशपत्रिका ॥ ५२० ॥ प्रोक्ता 'राजनिघंटे' तु वसुसंख्या भिषक्जनैः ।

गुणाः—महानीली गुणाढ्या स्याद्रंगश्रेष्ठा तु वीर्यदा ॥ ५२१ ॥ पूर्वोक्तनलिका देशा सगुणा सर्वकर्मसु ।

## ३० गोजिव्हा—वन गोभी ।

नामानि—गोजिव्हा खरपत्री च भूतोन्मादार्तिहा तथा ॥५२२॥ अधोमुखाऽधःपुष्पी च धेनुजिव्हा तदुत्तरम् । प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविशारदैः ॥ ५२३ ॥ गोधूमी दार्विपत्री च दीर्घिका क्रोष्ठमूलिका । गोभा गोजी खरस्पर्शा भूमिका गोजिकालिका ॥ ५२४ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः । 'द्रव्यरत्ने' दार्विकेति संप्रोक्ता भिषजां वरैः ॥ ५२५ ॥ गोभी तु दीर्घिका चैव तथैव खरपर्णिनी । प्रोक्ता 'मदनपाले' तु भिषक्विद्याविशारदैः ॥ ५२६ ॥

गुणाः—गोजिव्हा कटुका शीता पित्तघ्नी व्रणरोपणी । सर्वदन्तविषापघ्नी प्रोक्ता 'राजनिघंटके' ॥ ५२७ ॥ पाके स्वादु रसे हैमा वातला ग्राहिणी तथा । कफपित्तहरा हृद्या कासारुचिविनाशिनी ॥ ५२८ ॥ श्वासप्रमेहरक्तघ्नी ज्वरहा 'कैयदेवके' ।

# ३१ अपामार्ग-लटजीरा ।

नामानि—अपामार्गः शेखरी च किणिही खरमंजरी ॥ ५२९ ॥ अध्वः शल्या दुर्ग्रहा च प्रत्यक्पुष्पी मयूरिका । कांडकंठः शैखरिका मर्कटी दुरभिग्रहा ॥ ५३० ॥ पराक्पुष्पी च वशिरा कटी मर्कट-पिप्पली । कंटमंजरिका भंटा क्षत्रकः पंक्तिकंटकः ॥ ५३१ ॥ माला-कंटः कुब्जकश्च प्रोक्ता 'राजनिघंटके' किणही दुर्ग्रहा चैव तथा कर्कटपिप्पली ॥ ५३२ ॥ 'धन्वन्तरिनिघंटे' च संप्रोक्ता भिषजां वरैः । क्षारमध्या मार्गदन्ता 'कैयदेवे' प्रकीर्तिता ॥ ५३३ ॥ क्षुधापा-मार्गवश्चैव प्रोक्ता 'गणनिघंटके' । त्रिंशत्संख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ५३४ ॥

गुणाः—अपमार्गस्तु तीक्ष्णोष्ण कटुः कफविनाशकृत् । अर्श-कंडूदरामघ्नो ग्राही च विषहा तथा ॥ ५३५ ॥ रक्तहृद् वान्तिकृत् प्रोक्तो 'राजनामनिघंटके' । दीपनोथ सरश्चैव मेदानिलहरस्तथा ॥ ५३६ ॥ शूलसिध्मापचीकंडूदद्रुघ्नो 'कैयदेवके' । कफवातहरश्चैव 'गणे' प्रोक्तो भिषक्जनैः ॥५३७॥

# ३२ रक्तापामार्ग-लाल लटजीरा ।

नामानि—रक्तापामार्गकश्चैव क्षुद्रापामार्ग एव च । आघट्टको दुग्धनिका रक्तबिंदुलपपत्रिका ॥ ५३८ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक् विद्यापरायणैः । ततो रक्तफलश्चैव वसिरः कपिपिप्पली ॥ ५३९ ॥ 'धन्वन्तरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । रक्तो रक्त-फलाचेव बिन्दुको वषिरस्तथा ॥५४०॥ कुण्टस्तु मर्कटी चैव प्रत्यक्-श्रेणी खरच्छदः । 'कैयदेवनिघण्टे' च प्रोक्ता पूर्वचिकित्सकैः ॥५४१॥ धामार्गवः केशपर्णी प्रत्यक्पर्णी तथैव च । प्रोक्ता 'भावप्रकाशे' च विंशत्संख्या भिषक्जनैः ॥ ५४२ ॥

गुणाः—रक्तापामार्गकः शीतः कटुः कफमरुत्प्रदः । व्रणकंडू-विषघ्नश्च संग्राही वान्तिकृत् तथा ॥ ५४२ ॥ शीतस्वादु रसे पाके दुर्जरं वातलं तथा । रूक्षं च रक्तपित्तघ्नं विष्टम्भी 'कैयदेवके' ॥ ५४४ ॥ 'द्रव्यरत्नाकरे' प्रोक्तं वान्तिकृत् श्वासहारकं । वातकृत् 'कैयदेवे' च सर्वे फलगुणाः स्मृताः ॥ ५४५ ॥

## ३३ बला-बरियारा ।

नामानि—ओदनिका बला भद्रा समंगा तदनन्तरम् । भद्रोदनी च कल्याणी तथैव वरकाष्ठिका ॥ ५४६ ॥ मोटा भद्रफला चैव बलाढ्य वाटिका तथा । प्रोक्ता 'राजनिघंटे' तु भिषक् विद्याविशारदैः । ॥ ५४७ ॥ प्रोक्ता 'मदनपाले' तु सनासा वरवाहिनी । वाटी महासमंगा च तथैव खरयष्टिका ॥ ५४७ ॥ ओदनाह्वा शीतपाकी प्रोक्ता 'धन्वन्तरौ' ध्रुवं । वाट्यालका तु वाटी च चिरपुष्पी तदुत्तरम् ॥५४६॥ वाठ्या वीर्यबला चैव 'कैयदेवे' प्रकीर्तिता । क्रूरा समाशीतकरा प्रतापोरिष्यका तथा ॥ ५५० ॥ प्रोक्ता 'गणनिघंटे' तु सप्तविंशतिसंख्यका ।

गुणाः—बला तिक्ता च मधुरा तथा पित्तातिसारजित् ॥५५१॥ बलवीर्यपुष्टिदात्री तद्वत् कफविशोधिनी । प्रोक्ता 'राजनिघण्टे' च पुरातनभिषग्वरैः ॥ ५५२ ॥ तन्मूलं च त्वचा क्षीरं शर्करामूत्रकृच्छ्रजित् । स्निग्धा हिमा स्वादु वृष्या त्रिदोषशमनी तथा ॥ ५५३ ॥ रक्तपित्तक्षतघ्नीति प्रोक्ता 'धन्वन्तरौ' ध्रुवं । रसे पाके च मधुरा घातशोणितहा 'गणे' ॥ ५५४ ॥

## ३४ *बलोत्तरा-खिरेंटी, बरियारी ।

नामानि—बला महासमंगा च ओदनी च वृकारुहा । ततो वृद्धिबला चैव तथैव क्षततंडुला ॥ ५५५ ॥ भुजंगजिह्वा शीता च तथैव शीतपाकिनी । बलाह्वया शीतवरा वल्याखीरिहिटी तथा ॥ ५५६ ॥ बलोत्तरा व्यालजिह्वा पंचभू 'राजनामके' ।

गुणाः—महासमंगा मधुरा त्वम्ला चैव त्रिदोषहा ॥ ५५७ ॥ ज्वरदाहहरा प्रोक्ता वैद्यैः 'राजनिघण्टके' ।

## ३५ महाबला-सहदेवी ।

नामानि—महाबला ज्येष्ठबला तथैव तु कटंभरा ॥ ५५८ ॥ केसरिका केशरुहा वर्षपुष्पा मृगादनी । प्रसारणी देवबला तथैव केशवर्धिनी ॥५५६॥ सारिणी सहदेवी च पीतपुष्पी ततुत्तरम् । देवाह्वा

*इसके बीजको बलबीज कहते हैं ।

गन्धवल्ली च मृगा मृगरसा तथा ॥ ॥ ५६० ॥ प्रोक्ता 'राजनिघण्टे' तु भिषग्विद्याविशारदैः । वृहत्फला देवसहा तथैव तु वृहद्वला ॥ ५६१ ॥ वाट्यायनीति संप्रोक्ता भिषग्भिः 'राजनामके' । चीरपुष्पी तु वाट्या च वाट्याली तु वृहत्फला ॥ ५६२ ॥ 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्तानैव संशयः । तथा 'मदनपाले' तु वीरपुष्पा प्रकीर्तिता ॥ ५६३ ॥ महर्षी विपुला धन्या मांगल्यार्हा प्रसादनी । महागन्धा देवदण्डा तथैवोत्पलसंज्ञका ॥ ५६४ ॥ प्रोक्ता 'गणनिघण्टे' तु पञ्च-त्रिंशत् भिषक्जनैः ।

गुणाः—महाबला तु हृद्रोगशोफवातार्शहा तथा ॥ ५६५ ॥ शुक्र-वृद्धिकरी बल्या विषमज्वरहा 'नृपे' ।

## ३६ अतिबला-ककई ।

नामानि—बलिकातिबला बल्या घंटा चैव विकंकता ॥ ५६६ ॥ वाट्यपुष्पी च शीता च शीतपुष्पा तथैव च वृष्यगंधी भूरिबला प्रोक्ता 'राजनिघंटके' ॥ ५६७ ॥ वृष्या तु वाट्यपुष्पेति प्रोक्ता 'धन्वंतरौ' ध्रुवं । भारद्वाजी ऋष्यप्रोक्ता पुष्पर्णी ऋष्यपुष्पिका ॥ ५६८ ॥ पीतपुष्पी ऋष्यगंधा तथैव तु महासहा । केयदेवनिघण्टे' तु संप्रोक्ता भिषजांवरैः ॥ ५६९ ॥ तथा 'मदनपाले' तु संप्रोक्ता वृष्यगंधिका । कंतिका तु सहा चैव प्रोक्ता 'भावप्रकाशके' ॥५७०॥ सुवर्णकेति संप्रोक्ता एकविंशतिसंख्यका ।

गुणाः—बलिका तु भवेत्तिक्ता वातघ्नी कृमिदाहनुत् ॥ ५७१ ॥ तृष्णाछर्दिविषघ्नी च क्लेदोपशमनी 'नृपे' ।

## ३७ नागबला-गुलसकरी, गंगेरन । *

नामानि—महाबला नागबला खरगंधा चतुःफला ॥ ५७२ ॥ महोदया महाशाखा महापत्रा महाफला । विश्वदेवात्वरिष्ठा च खर्वा ह्रस्वा गवेधुका ॥५७३॥ देवदण्डा महादण्डा खंडा 'राजनिघण्टके' गांगेरुकी कालगाढा बला च खरघन्विका ॥ ५७४ ॥ खंडारी 'केयदेवे' तु संप्रोक्ता भिषजांवरैः । झाषा 'भावप्रकाशे' च संप्रोक्ता नैव संशयः ॥ ५७५ ॥ वृक्षाव्हा तु गवेधूका क्षाला गण-

---

* इसका फल गुलाबीरङ्ग का होता है। इसका फल सहदेवीके फलसे बड़ा और जरा चपटा होता है। इसके फल में चार पखरी होती हैं।

निघण्टके । पंचविंशतिसंख्याका प्रोक्तैषा भिषजांवरैः ॥ ५७६ ॥

गुणाः—अथ नागबला चैव गुरूष्णाम्लमधुस्तथा । कंडकुष्ठव्रणघ्नी च वातपित्तहरा 'नृपे' ॥ ५७७ ॥

## बलाचतुष्टयगुणाः ।

स्निग्धं मधुरसं पाके शीतलं ग्राहिणी तथा ॥ ५८८ ॥ सुष्ठा ओजबलायुर्दा कांतिकृत् वातरक्तजित् । रक्तपित्तहरा चैव योनिदोषहरा तथा ॥ ५८९ ॥ क्षतक्षयबृहत्कुष्ठान् हंति वृष्या च 'केयके'। तत्फलं 'केयदेवे' च पाके स्वादु रसे मधु ॥ ५९० ॥ हिमं गुरुस्तंभनं च लेखनं तु विबंधनं । आध्मानं पवनं हंति गरपित्तहरं तथा ॥ ५९१ ॥ कफरक्तहरं प्रोक्तं वैद्यैः 'केयनिघंटके' पुंस्त्वमेहहरं प्रोक्तं 'मदने' वैद्यनायकैः ॥ ५९२ ॥

## *३८ महाराष्ट्री-मराठी ।

नामानि—महाराष्ट्री शारदी च संप्रोक्ता तोयपिप्पली । मत्स्यादनी मत्स्यगंधा लांगली शकुलादनी ॥ ५७८ ॥ अग्निज्वाला चित्रपत्री प्राणदा जलपिप्पली । मत्स्योदरी बहुशिखा तृणशीता तदुत्तरा ॥ ५७९ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविशारदैः शकुलादनीति विख्याता 'धन्वन्तरिनिघंटके' ॥ ५८० ॥ अम्बुवल्ली जीविता च 'द्रव्यरत्नाकरे' स्मृता । धत्तूरकंटकी चैव प्रोक्ता 'मदनपालके' ॥ ५८१ ॥ गंडूगद्दा कंचटं च तथैव तु गडूगदा । 'केयदेवे' तु संप्रोक्ता एकविंशतिसंख्यका ॥ ५८२ ॥

गुणाः—महाराष्ट्री तीक्ष्णकटूवी कषाया मलशोधिनी । व्रणकीटहरा प्रोक्ता.रसदोषहरा 'नृपे' ॥ ५८३ ॥ कफवातहरा प्रोक्ता श्वासरक्तविनाशिनी । विषदाहभ्रमघ्नी च मूर्च्छातृट्घातिनी 'धने' ॥ ५८४ ॥ शीतलं कटु पाके च रसे रुक्षं हृदि प्रियं । रुचिप्रदं

*मराठी का पेड़ एक या डेढ़ बीता ऊंचा होता है । इसके पत्ते तुलसीके समान किन्तु जरा मोटे होते हैं । इसमें पिलाई ललाई लिये बोंडिया लगती हैं । जीभमें रखनेसे अकरकराके समान जीभमें चुनचुनाती है । कोई कोई इसे अकरकरा का ही क्षुप कहते हैं । गलेमें छाले पड़े हों या दुखता हो तो इसकी बोंडियां खाकर लार गिरने देवे तो मुंह जल्द आराम होता है ।

वन्हिकृद्धि संग्राही दाहनाशनं ॥ ५८५ ॥ चक्षुष्यं रक्तव्रणजित् प्रोक्तं 'कैयनिघण्टके'। 'द्रव्यरत्नाकरे' प्रोक्तं रक्तदाहहरं तथा॥५८६॥ लघु शुक्रकरं प्रोक्तं 'मदने' वैद्यनायकैः। कफपित्तहरा चैव शोधनी ज्वरदाहनुत् ॥ ५८७ ॥ ज्वरदाहप्रमेहघ्नो हिमा प्रोक्ता 'गणे' ध्रुवं।

## ३९ अश्वगंधा-असगन्ध।

नामानि—अश्वगंधा वाजिगंधा कंचुकाष्ठा वराहिका। वराहकर्णी तुरगी वनजा वाजिनी हयी ॥ ५९३ ॥ पुष्टिदा बलदा पुण्या हयगंधा च पीवरा, वलाशपर्णी वातघ्नी शामला कामरूपिणी ॥५९४॥ वल्या कालप्रिया चैव गंधपत्री हयप्रिया। वराहपुत्री विख्याता प्रोक्ता 'राजनिघण्टके' ॥ ५९५ ॥ तथा वाजिकरी चैव कंचुक्याश्च वरोहका। 'धन्वंतरिनिघण्टे' तु संप्रोक्ता भिषजांवरैः ॥५९६॥ कुष्ठगंधा हयाव्हा च गोकर्णी वरदा वृषा। बर्हिष्पीता तु पित्ता च कंचुका 'कैयदेवके' ॥ ५९७ ॥ अवरोहो रक्तजश्च 'द्रव्यरत्नाकरे' स्मृता। तथा 'मदनपाले' तु तुरगाव्हा प्रकीर्तिता ॥ ५९८ ॥ हयाव्हा कदरा चैव तथैव कुष्ठगंधिनी। प्रोक्ता 'भावप्रकाशे' च भिषक्शास्त्रविशारदैः ॥ ५९९ ॥ तुरगा हयगंधी च बृंहणी वातशामनी। रसायनवरा चैव त्वलको 'गणनामके' ॥ ६०० ॥ चत्वारिंशत्सप्त चैव संख्या प्रोक्ता भिषग्वरैः।

गुणाः—अश्वगंधा कटूष्णा च तिक्ता बलप्रदायिनी ॥ ६०१ ॥ वातहृत् श्वासकासघ्नो क्षयव्रणहरा 'नृपे'। वातोद्भवकफघ्नी च विषव्रणहरा तथा ॥ ६०२ ॥ कांतिदा भिषजां श्रेष्ठैः प्रोक्ता 'धन्वन्तरे' ध्रुवं। शोफकंडूचित्रकुष्ठकृमिक्षतक्षयापहा ॥ ६०३ ॥ 'कैये' प्रोक्ता भिषक्श्रेष्ठै 'मदने' शुक्रहा स्मृता।

## ४० हपुषा-बड़ी हाऊबेर।

नामानि—हपुषाविपुषा विश्रा विश्रगंधा विगन्धिका ॥ ६०४ ॥ प्रोक्ता 'राजनिघंटे' तु 'कैयदेवे' ततः परैः। विश्रो चैव तु कुष्ठघ्नो तथैव विषदूषणी ॥ ६०५ ॥ वसुसंख्या भिषग्भिस्तु संप्रोक्ता नैव संशयः।

## ४१ ध्वांक्षनाशिनी-छोटी हाऊबेर।

नामानि—तथा खल्पफला चैव कच्छूघ्नी ध्वांक्षनाशिनी ॥ ६०६ ॥ प्लीहशत्रु विषघ्नी च कफघ्नी त्वपराजिता । प्रोक्ता 'राजनिघंटे' तु 'वैद्यविद्याविशारदैः ॥ ६०७ ॥ अथाऽश्वत्थफला चैव प्रोक्ता 'धन्वन्तरौ' ध्रुवं । यक्ष्मघ्ना वपुषा चैव तथैव ध्वांक्षनाशिकी ॥ ६०८ ॥ विश्रगंधा मत्स्यगंधा विषहा 'केयदेवके'। चित्रगन्धा च दुर्गन्धा प्रोक्ता 'गणनिघंटके' ॥ ६०९ ॥ सप्तभूसंख्यका प्रोक्ता वैद्यविद्याविशारदैः ।

गुणाः—हपुषाह्वयमित्युक्तं कटुतिक्तोष्णकं गुरु ॥ ६१० ॥ बलासश्लेष्मप्रदरं गुरूदरहरं तथा। विट्बंधशूलगूल्मघ्नमर्शोघ्नं 'राजनामनि' ॥ ६११ ॥ वातप्लीहविबंधघ्नं 'धन्वन्तरिनिघण्टके'। दीपनी ग्राहिणी गुर्वी वातोदरनिबर्हिणी ॥ ६१२ ॥ पित्तोदरहरा प्रोक्ता वैद्यः 'केयनिघंटके'। वातार्शहा भिषक्श्रेष्ठै 'मदने' परिकीर्तिता ॥ ६१३ ॥

## ४२ शतावरी-सतावर।

नामनि—शतावरी शतपदी पीवरींदीवरी वरा। वृष्य दीप्या-द्वीपशत्रु द्वीपिकाऽधरकंठिका ॥ ६१४ ॥ सूक्ष्मपत्रा सुपत्रा च बहुमूला शताह्वया । नारायणी स्वादुरसा शताह्वा लघुपर्णिका ॥ ६१५ ॥ आत्मशक्ति जरामूला शतवीर्या महोदनी । मधुरा शतमूला च केशिका शतपत्रिका ॥ ६१६ ॥ विश्वाख्या वैष्णवी कार्ष्णि वासुदेवी वरीयसी । दुर्मरा तैजवल्लीति प्रोक्ता 'राजनिघण्टके' ॥ ६१७ ॥ शताह्वा बहुपुत्री च प्रोक्ता 'मदनपालके'। भीरू बहुसुता हेतुर्दरी 'भावप्रकाशके' ॥ ६१८ ॥

## ४३ महाशतावरी-बड़ी सतावर।

नामानि—महाशतावरी वीरा तुंगिनी बहुपत्रिका। सहस्रवीर्यां सुरसा महापुरुषदंतिका ॥ ६१९ ॥ ऊर्ध्वकंदा महावीर्या फणिजिह्वा महाशना। शतवीर्या सुवीर्या च प्रोक्ता 'राजनिघंटके' ॥ ६२० ॥ अभीरुरूर्ध्वकंठी च प्रोक्ता 'धन्वन्तरौ' ध्रुवं । ऋष्यप्रोक्ता भीरुपत्री 'केयदेवे' प्रकीर्तिता ॥ ६२१ ॥ चरी केशी सूक्ष्मपत्री प्रोक्ता 'मदन-

पालके' । हेतुर्महोदरी चैव प्रोक्ता 'भावप्रकाशके' ॥ ६२२ ॥ अहिजिह्वकसंज्ञेति प्रोक्ता 'गणनिघण्टके' । पञ्चविंशतिसंख्याका संप्रोक्ता भिषजांवरैः ॥ ६२३ ॥

गुणाः—शतावरीद्वयं वृष्यं मधुरं पित्तहारकं । हिमं च कफवातघ्नी रसायनवरा 'नृपे' ॥ ६२४ ॥ 'द्रव्यरत्नाकरे' स्तन्या हृद्या 'मदनपालके' । तदंकुरगुणाः प्रोक्ताः कार्श्यक्षयत्रिदोषहृत् ॥ ६२५ ॥ गुर्वा स्निग्धा शुक्रला च बल्या मेधाग्निपुष्टिदा । चक्षुष्या वातरक्तघ्नी पित्तासृग्गुल्मनाशिनी ॥ ६२६ ॥ अतिसारादिनाशघ्नी वातपित्तार्शहा तथा । ग्रहण्यर्शोहृत् प्रोक्ता 'कैयदेवनिघंटके' ॥ ६२७ ॥

## ४४ एलावालुक-एलुवा ।

नामानि—एलावालुकसंज्ञा च त्वलुकं वालुकं तथा ॥ ६२८ ॥ हरिवालुकसंज्ञं च त्वेलावालुकमेव च । कपित्थं दुष्टवर्णं च प्रसरं च द्रूढं तथा ॥६२९॥ एलागन्धिकमेलाव्हंगुप्तगंधि सुगधिकं । एलाफलं तु संप्रोक्तं 'राजनामनिघण्टके' ॥ ६३० ॥ त्वग्गंधं चैव त्वक्पंच कुष्ठगंन्धि तथैव च । सुगंधी प्रसरं चैव त्वेलालुकमतः परं ॥६३१॥ 'कैयदेवे' तु संप्रोक्तं वैद्यविद्याविशारदैः । तथा 'मदनपाले' तु एलालु परिकीर्तितं ॥ ६३२ ॥ कपित्थपत्रं 'भावे' च गन्धत्वक् 'गणनामके' ।

गुणाः—एलावालुकमित्युक्तं कषायं कफवातहृत् ॥ ६३३ ॥ मूर्च्छाज्वरहरं दाहनाशनं रोचनं 'नृपे' । 'द्रव्ये' विषघ्नं संप्रोक्तं 'मदने' मूत्ररोगहृत् ॥ ६३४ ॥ 'भावे' श्वासारुचिघ्नं च विषहृद्रोगनाशनं । विषहं गुददोषघ्नं भिषग्भिः परिकीर्तितं ॥ ६३५ ॥ 'धन्वंतरिनिघण्टे' च शोधनं परिकीर्तितं । पाके कटु शीतलं च लघु कंडूहरं तथा ॥ ६३६ ॥ व्रणछर्दितृषाघ्नं च कासकुष्ठबलासहृत् । रक्तपित्तहरं बल्यं कृमिनुत् 'कैयदेवके' ॥ ६३७ ॥

## ४५ तेरणी, तेरडा ।

नामानि—तेरणी तेरणस्तेरः कुनीली रागदस्तथा । प्रोक्ता 'राजनिघण्टे' तु भिषक्विद्याविचक्षणैः ॥ ६३८ ॥ गौरिणी तेर इति च कुलीनी रङ्गनामकः । ग्रहसंख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ६३९ ॥

गुणाः—तेरणः शिशिरस्तिक्तो व्रणघ्नो 'राजनामके' ।

## ४६ कलिकारी-करियारी ।

नामानि— कलिकारी लांगलिनी हलिनी गर्भपातिनी ॥६४०॥ दीप्ता विशल्याग्निमुखी हली नक्तेंदुपुष्पिका । विद्युज्वालाग्निजिव्हा च व्रणहृत् पुष्पसौरभा ॥ ६४१ ॥ स्वर्णपुष्पावन्हिशिखा प्रोक्ता 'राजनिघंटके' । अनंता वन्हिवक्त्रा च गर्भनुत् 'भावनामके' ॥ ६४२ ॥ फलिनी शक्रपुष्पीका प्रोक्ता 'कोशे' भिषक्वरैः । कलिकाली लांगली च सीरी दीप्ता तथैव च ॥ ७४३ ॥ पुष्पेंदुश्च भिषक्श्रेष्ठैः प्रोक्ता 'धन्वंतरौ' ध्रुवं । इंदुपुष्पी वन्हिजिव्हा प्रदीप्ताग्निशिखा शिखा ॥ ६४४ ॥ तथा वन्हिमुखा चैव प्रभाता पुष्पसौरभा । 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ६४५ ॥ 'द्रव्यरत्नाकरे' चैव लांगुली परिकीर्तिता । कलिहारी शक्रपुष्पी सारी 'मदनपालके' ॥ ६४६ ॥ सारेंद्रपुष्पी विख्याता वन्हिज्वाला तथैव च । प्रोक्ता 'गणनिघण्टे' तु चत्वारिंशति संख्यका ॥ ६४७ ॥

गुणाः—कलिकारी कटूष्णा च कफवातविनाशिनी । गर्भान्तः शल्यनिः कासकारिणी सारिणी 'नृपे' ॥ ६४८ ॥ 'मदने' शूलहा 'धन्वे' व्रणश्वयथुनाशिनी । 'केयदेवे' पित्तला च बलासघ्नी तथैव च ॥ ६४६ ॥ कुष्ठार्शोव्रणजंतुघ्नी भिषग्भिः परिकीर्तिता ॥

## ४७ जयंती ।

नामानि—बला मोटा हरीता च सूक्ष्ममूला जया तथा ॥६५०॥ ततोपराजिता चैव विक्रांता विजया तथा । प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ ६५१ ॥ स्थूलमूलेति संप्रोक्ता 'केयदेवे' भिषक्जनैः । शीतला वातलश्चैव शणपर्णीति 'केयके' ॥ ६५२ ॥ 'द्रव्यरत्नाकरे' चैव जयन्ती परिकीर्तिता । वन्हिभूसंख्यका प्रोक्ता वैद्यविद्याविशारदैः ॥ ॥ ६५३ ॥

गुणाः—जयंती तु भवेत्तिक्ता कटूष्णा वातनाशिनी । भूतापहा कंठशोधी सा कृष्णा च रसायनी ॥६५४॥ प्रोक्ता 'राजनिघण्टे' तु 'धन्वे' विषत्रिदोषहा ॥ 'केये' पित्तकफघ्नी च मूत्रकृच्छ्रहरा तथा ॥ ६५५ ॥ जयं विवादे कुरुते प्रोक्ता वैद्यैर्न संशयः । 'द्रव्ये' हिमा कफघ्नीति भिषग्भिः परिकीर्तिता ॥ ६५६ ॥

## ४८ काकमाचिका-मकोय ।

नामानि—काकमाची ध्वांक्षमाची वायसाव्हा च वायसी । सर्वतिक्ता बहुफला कट्फला च रसायनी ॥ ६५२ ॥ काकमाता गुच्छफला स्वादुपाका तु सुन्दरी ॥ वरा विद्राविणी चैव मत्स्याक्षी कुष्ठनाशिनी ॥५५३॥ तिक्ता च बहुतिक्तेति प्रोक्ता 'राजनिघण्टके' । 'धन्वंतरिनिघण्टे' तु संप्रोक्ता भिषजांवरैः । काकमाची तु कामाता ध्वांक्षी च काकिनी तथा ॥ ६५५ ॥ माची गुडफला चैव 'कैय' प्रोक्ता भिषग्वरैः । तुंडकी कामना चैव प्रोक्ता 'गणनिघण्टके' ॥ ६५७ ॥

गुणाः—काकमाची कटुस्तिक्ता रसोष्णा कफशूलहृत् । शोफार्शः कुष्टकंडूनां नाशिनी 'राजनामके' ॥६५७॥ हिक्काछर्दिविनाशी च 'भावे' नेत्रहिता स्मृता । रसायनी त्रिदोषघ्नी प्रोक्ता 'धन्वंतरे' ध्रुवम् ॥६५८॥ हृद्यावृष्या च स्वर्येति प्रमेहश्वासकासहा । ज्वरारुचिहरा प्रोक्ता 'कैयदेवनिघण्टके' ॥६५९॥ स्निग्धा शुक्रप्रदा प्रोक्ता 'मदने' परिकीर्तिता ।

## ४९ मूषकमारो-मूसामारी ।

नामानि—श्रुतश्रेणी द्रवंती च न्यग्रोधी मूषिकाव्हया ॥६६०॥ चित्रा मूषकमारी च प्रत्यक्श्रेणी च चक्षुषा । कटुराखुविषघ्नीति प्रोक्ता 'राजनिघण्टके' ॥ ६६१ ॥ दशसंख्येति संप्रोक्ता वैद्यविद्याविशारदैः ।

गुणाः—श्रुतश्रेणी 'नृपे' प्रोक्ता कटुराखुविषापहा ॥ ६६२ ॥ चक्षुष्या व्रणदोषघ्नी नेत्रामयनिकृंतनी ।

## ५० विजया-भांग ।

नामानि—विजया वीरपत्रा च गंजाई चपला जया ॥ ६६३ ॥ आनन्दा हर्षणी चैव प्रोक्ता 'राजनिघण्टके' । मातुलानी संगिका च भंगिका 'कैयदेवके' ॥ ६६४ ॥ भंगा गंजा मोहिनीति 'द्रव्यरत्नाकरे' स्मृता । मादिनीति भिषक्श्रेष्ठैः प्रोक्ता 'भावप्रकाशके' ॥ ६६५ ॥

गुणाः—जया कटुः कषायोष्णा तिक्ता वातकफापहा । संग्राही वाक्प्रदा बल्या मेधावी दीपिनी 'नृपे' ॥ ६६६ ॥ पित्तला कर्षणी चैव मदकृत् 'कैयदेवके' ।

## ५१ मार्कव-भांगरा।

नामानि—मार्कवो भृङ्गराजश्च भृङ्गाह्वा केशरंजनः ॥ ६६७ ॥ पित्तप्रियोंगारकश्च केश्यः कुन्तलवर्द्धनः। प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः ॥ ६६८ ॥ भृङ्गारको भेकरजो भृङ्गो भृङ्गार एव च। 'धन्वन्तरे' भिषक्श्रेष्ठैः कथितो नैव संशयः ॥ ६६९ ॥ रविप्रियो पंकजातः सूर्यावर्तस्तु केशराट्। अभेदकरजश्चैव केशाली रविवल्लभः ॥ ६७० ॥ प्रोक्तो 'मदनपाले' तु वैद्यविद्याविशारदैः। तथा 'भावप्रकाशके' च भृङ्गारः परिकीर्तितः ॥ ६७१ ॥ मार्कलः पंकजश्चैव भृङ्गाह्वो 'गणनामके'। सप्तविंशतिसंख्याका प्रोक्तैषा भिषजांवरैः ॥ ६७२ ॥

गुणाः—मार्कवो स्यात्तु चक्षुष्यस्तिक्तोष्णः केशरंजनः। कफामशोफचित्रघ्नो नीलश्चैव रसायनः ॥ ६७३ ॥ वैद्यै 'राजनिघण्टे' च 'द्रव्ये' ज्वरहरः स्मृतः। 'भावे' दन्तहितः प्रोक्ते पुरातनचिकित्सकैः ॥ ६७४ ॥ त्वच्यो पांडुं मुष्कवृद्धिं विषं हन्तीति 'धन्वके'। अक्षिरोगशिरोर्तिघ्नो कफवातविनाशनः ॥ ६७५ ॥ कासकृमिश्वास कुष्ठान् हन्ति 'केये' स्मृतं बुधैः।

## ५२ पीतमार्कव-पीला भांगरा।

नामानि—स्वर्णभंगारिसंज्ञश्च हरिवासो हरिप्रियः ॥६७६॥ देवप्रियो वन्दनीयः पवनो 'राजनामके'।

गुणाः—गुणास्तु पूर्ववत्।

## ५३ नीलमार्कव-नीला भांगरा।

नामानि—महाभृङ्गो नीलपुष्पः श्यामलो नीलभृङ्गराट् ॥ ६७७॥ महानीलः सुशीलश्च प्रोक्तो 'राजनिघण्टके'।

## ५४ काकजङ्घा-मसी।

नामानि—काकजङ्घा ध्वांक्षजघा काकाह्वा वायसी च सा ॥ ६७८ ॥ पारावतपदी दासी नदीकान्तामलोमशा। प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः ॥ ६७९ ॥ 'धन्वन्तरिनिघण्टे' च प्राचीबला सुलोमशा। मद्व्या कर्पणी काका काकतिक्ता नदीकका

॥ ६८० ॥ प्राचीचलत्सरित्कान्ता तथा भूधरभूषणा । 'कैयदेवे' भिषक्श्रेष्ठैः नदीकान्ता तु 'द्रव्यके' ॥ ६८१ ॥ ततः प्रतिबला चैव परा तु सरिका तथा । राजनीति भिषक्श्रेष्ठैः प्रोक्ता 'गणनिघण्टके' ॥ ६८२ ॥ त्रयोविंशतिसंख्याका संप्रोक्ता भिषजांवरैः ।

गुणाः—काकजंघा तु तिक्तोष्णा कृमिव्रणकफापहा ॥ ६८३ ॥ बाधीर्याजीर्णनाशा च विषमज्वरहा 'नृपे' । हिमा कषाया संप्रोक्ता कफपित्तविनाशिनी ॥ ६८४ ॥ रक्तकुष्ठहरा कंडूविषहा 'कैयदेवके' । रक्तपित्तं हिमं हन्ति प्रोक्ता 'द्रव्ये' भिषक्वरैः ॥ ६८५ ॥

## ५५ चंचू ।

नामानि—चंचू तु विजला चंचुः कलभी वीरुपत्रिका । चुंचुरश्चुंचुपत्रश्च सुशाकः क्षेत्रसम्भवः ॥ ६८६ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । कटीरज कटीरश्च बृहद्घोटी च लोणिका ॥ ६८७ ॥ कुटिंजर कुटीरश्च तथैव तु सुसूरकः । 'कैयदेवे' भिषक्श्रेष्ठैः कथितो नैव संशयः ॥ ६८८ ॥ चंचुष्को चंचुपत्राख्यो पिच्छलच्छल एव च । 'द्रव्यरत्नाकरे' चैव नवभू परिकीर्तिता ॥ ६८९ ॥

गुणाः—चंचू तु मधुरा तीक्ष्णा कषाया मलशोषिणी । गुल्मोदरविबन्धार्शोग्रहणीनाशिनी 'नृपे' ॥ ६९० ॥ सरः शीता वन्हिकृच्चवातहा 'द्रव्यनामके' । दोषत्रयविनाशा च धातुपुष्टिकरा बला ॥६९१॥ मेध्या 'भावप्रकाशे' च प्रोक्ता वैद्यैर्न संशयः । मूत्रकृच्छ्रहरा बस्तीवातहेति 'गणे' स्मृता ॥ ६९२ ॥

## ५६ बृहच्चंचू ।

नामानि—बृहच्चंचु विषारिश्च महाचंचुः सुचंचुका । स्थूलंचुचुर्दीर्घपत्री दिव्यगन्धा तु 'राजनि' ॥ ६९३ ॥ सप्तसंख्येति प्रोक्तैषा भिषक्शास्त्रविशारदैः ।

गुणाः—बृहच्चंचु कटूष्णा च कषाया मलशोधिनी ॥ ६९४ ॥ गुल्मशूलोदरार्शघ्नी विषहा च 'रसायनी' । तद्बीजं तु कटूष्णं च गुल्मशूलविषापहं ॥६९५॥ त्वग्दोषकंडुकुष्ठघ्नं प्रोक्तं 'राजनिघंटके' ।

## क्षुद्रचंचु ।

नामानि—क्षुद्रचंचुस्तु चंचुः स्याच्चुंचुः शुनकचुंचुका ॥ ६९६॥ त्वक्सारभेदनी क्षुद्रा कटुका परपत्रिका ।

गुणाः—क्षुद्रचंचुस्तु मधुरा कटूष्णा च कषायिका ॥ ६९७ ॥ दीपनी शूलगुल्मार्शशमनी च विबंधकृत् । प्रोक्ता 'राजनिघंटे' : पुरातनचिकित्सकैः ॥ ६९८ ॥

## ५८ सिंदुवार-श्वेत निर्गुण्डी, श्वेत सम्हालू ।

नामानि—सिंदुवारः श्वेतपुष्पः सिंदूकः सिंदुवारकः । स्थिरसाधनकश्चैव त्वनन्तः सिद्धकस्तथा ॥ ६९९ ॥ अर्थसिद्धकसंज्ञेति प्रोक्ता 'राजनिघण्टके' । श्वेतको नीलपुष्पश्च तद्वत् शीतसहस्तथा ॥७००॥ निर्गुण्डी सितसिन्दूका प्रोक्ता 'धन्वन्तरौ' ध्रुवं । वनकेंद्रा भूतकेशी भूतावेश्या तु सुस्थिरा ॥७०१॥ 'कैयदेवनिघण्टे' तु प्रोक्ता सप्तदशेति च ।

गुणाः—सिंदुवारा कटुस्तिक्ता कफवातक्षयापहा ॥ ७०२ ॥ कुष्ठकंडूशूलहरा प्रोक्ता 'राजनिघंटके । कृमिकुष्ठप्लीहहरा गुल्मारुचिहरा 'धने' ॥ ७०३ ॥ चक्षुष्या दीपनी मेध्या केश्यारोचकहारिणी। मेदामशूलव्रणहा प्रतिश्यायहरा तथा ॥ ७०४ ॥ शोफहा श्वासकासघ्नी तत्पुष्पं विषपित्तनुत् । 'कैयदेवनिघंटे' च स प्रोक्ता भिषजां वरैः ॥ ७०५ ॥ स्मृतिप्रदामवातघ्नी 'द्रव्ये' प्रोक्ता भिषक्जनैः। धूपलेपात्विषघ्नश्च रक्तगुल्महरा तथा ॥ ७०६ ॥ उदावर्तहरा प्रोक्ता 'गणनामनिघंटके' ।

## ५९ नीलसिंदुक-नीला सम्हालू ।

नामानि—शीतंसहा तु निर्गुण्डी तथैव नीलसिंदुकः ॥ ७०७ ॥ सिन्दूकच्छपिका भूतकेशीन्द्राणी च नीलिका । प्रोक्ता 'राजनिघण्टे' तु भिषक्विद्या परायणैः ॥७०८॥ गिरि सिन्दुक संज्ञश्च नीलसिन्दुसहा तथा । इंद्राणी 'कैयदेवे' तु संप्रोक्ता भिषजांवरैः ॥ ७०९ ॥ दशसंख्येति प्रोक्तैषा वैद्यविद्याविचक्षणैः ।

गुणाः—नीलसिंदुः कटुस्तिक्त रूक्षो कासहरस्तथा ॥ ७१० ॥ श्लेष्मशोफानिलहरो प्रदराध्मानहा 'नृपे' ।

## ६० शेफालिका-बननिर्गुण्डी ।

नामानि—शेफालिका तु सुवहा शुक्लांगी शीतमंजरी ॥ ७११ ॥ अपराजिता च विजया वातकी भूतकेश च । प्रोक्ता 'राजनिघण्टे' तु

भिषक्शास्त्रविशारदैः ॥ ७१२ ॥ वनजा चैव शुक्ला च तथैव नील-मञ्जरी । तथैव श्वेतसुरसा प्रोक्ता 'धन्वन्तरौ' ध्रुवं ॥७१३॥ वनजा-मरपत्री च शतभीरुः छदा तथा । भूपदी तु सुगन्धा च तथैव सुरसा रसा ॥ ७१४ ॥ 'कैयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः । सुवहा तु चला चैव स्मृतिदा 'भावनामके' ॥ ७१५ ॥ तथेंद्रसुरसा चैव प्रोक्ता 'त्वमरकोशके' । चतुर्विंशतिसंख्याका संप्रोक्ता नैव संशयः ॥ ७१६ ॥

गुणाः—श्वेतनिर्गुण्डिका वातकफघ्नी सन्धिवातहा । गुदवात-हरा प्रोक्ता 'राजनामनिघण्टके' ॥ ७१७ ॥

## ६१ भेण्डा-वनभिण्डी ।

नामानि—भेंडा भिंडातिका भिंडो भिंडकः क्षेत्रसंभवः । चतु-ष्पदः चतुःपुण्ड्रः सुशाकश्चाम्लपत्रकः ॥ ७१८ ॥ करपर्णो वृत्तबीजो प्रोक्ता 'राजनिघण्टके' ।

गुणाः—भेंडात्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ॥ ७१९ । 'राजनामनिघण्टे' च 'द्रव्ये' वृष्यकरा स्मृता ।

## ६२ पुत्रदा-पुत्रदाई ।

नामानि—पुत्रदा गर्भदात्री च प्रजादापत्यदा तथा ॥ ७२० ॥ सृष्टिप्रदा प्राणिमाता तापसद्रुमसन्निभा । सप्तसंख्या च संप्रोक्ता 'राजनामनिघण्टके' ॥ ७२१ ॥

गुणाः—पुत्रदा मधुरा शीता नारीपुष्पादिदोषहा । पित्तदाह-श्रमहरा गर्भदा 'राजनामके' ॥ ७२२ ॥

## ६३ तक्राह्वा-ताका ।

नामानि—तक्राव्हा तक्रभक्षा च तक्रपर्याय एव च । पंचांगुली सिताभाख्या 'द्राजनाम्नीति' पंच च ॥ ७२३ ॥

गुणाः—तक्राव्हस्तु कटुः प्रोक्तो दुष्टव्रणविनाशकः । मेहप्रदर-पित्तघ्नो वैद्यै 'राजनिघण्टके' ॥ ७२४ ॥

## ६४ स्वर्णुली-सनाय, सोनुली ।

नामानि—स्वर्णुली हेमपुष्पी च स्वर्णपुष्पध्वजा तथा ।

गुणाः—स्वर्णुली तु कटुः शीता कषाया व्रणहा 'नृपे' ॥ ७२५ ॥ कासश्वासहरा 'द्रव्ये' कफपित्तहरा तथा ।

## ६५ खसखस ।

नामानि—खसखसः सूक्ष्मबीजः स्यात् सुबीजः सूक्ष्मतंडुलः ॥ ७२६ ॥ प्रोक्तो 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । खस्तिलो तिलभेदश्च शुभ्रपुष्पो लसत्फलः ॥ ७२७ ॥ वृष्या बल्येति कविभिः प्रोक्ता 'मदनपालके' । 'भावप्रकाशे' खास्खस रुद्रसंख्या भिषग्वरैः ॥ ७२८ ॥

गुणाः—खस्खसी मधुरा प्रोक्ता कांतिकृद्वीर्यदा बला । प्रोक्ता राजनिघंटे' च वैद्यविद्याविचक्षणैः ॥ ७२९ ॥ वृष्या ग्राही च पित्तघ्नी 'द्रव्ये' च गुरु वातकृत् ।

## ६६ सिग्रुडी-शेगुडी ।

नामानि—सिग्रुडी मतिदा बल्या तथा पंगुत्वहारिणी ॥७३०॥ वृषत्यति च वातघ्नी गुच्छपुष्पी तु 'राजके' ।

गुणाः—सिग्रुडी कटूष्णा च वातहृत् पृष्ठिशूलहा ॥ ७३१ ॥ योग्या रसायने चैव देहदार्ढ्य करी 'नृपे' ।

## ६७ अरण्यकुसुंभ-वनकुसुम ।

नामानि—ततोरण्यकुसुम्भा च कौसुंभस्त्वग्निसंभवा ॥ ७३२ ॥ प्रोक्ता 'राजनिघण्टे' तु वन्हिसंख्या भिषक्जनैः ।

गुणाः—अथारण्यकुसुंभस्तु कटुः पाके च श्लेष्महृत् ॥ ७३३ ॥ दीपनश्चैव संप्रोक्तो 'राजनामनिघण्टके' ।

## ६८ आहुली-हुरहुर, तरवड ।

नामानि—आहुल्यं हलुराख्यं च करं तरवटं तथा ॥ ७३४ ॥ ततः शिंबीफला चैव सुपुष्पात्वबुरं तथा । दन्तकाष्ठं हेमपुष्पं पीतपुष्पं तथैव च ॥ ७३५ ॥ ततः कांचनपुष्पं च नृपमांगल्यमेव च । शरत्पुष्पं च विख्यातं प्रोक्तं 'राजनिघण्टके' ॥७३६॥ वन्हिभूसंख्यका प्रोक्ता भिषक्शास्त्रविशारदैः ।

गुणाः—आहुल्यं तु भवेत्तीक्ष्णं चक्षुष्यं शीतमेव च ॥ ७३७ ॥ पित्तदाहहरं चैव मुखरुक्कुष्ठकण्डुहृत् । जन्तुशूलव्रणहरं प्रोक्तं 'राजनिघण्टके' ॥ ७३८ ॥

## ६९ भूम्याहुली-सोनामक्खी ।

नामानि—ततस्तु भूम्याहुलिका कुष्ठकेतुस्तथैव च । मार्कण्डेयं तु विदितं महौषधमतः परम् ॥७३६॥ प्रोक्तं 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । मार्कण्डी भूपैठरिका तथैव मृदुरेचनी ॥ ७३० ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः । ततो भूपिंडरी चैव तथैव मधुरेचनी ॥ ७३१ ॥ अष्टसंख्या भिषक्भिस्तु संप्रोक्तैषा विचक्षणैः ।

गुणाः—भूम्याहुली कटुस्तिक्ता ज्वरकुष्ठप्रसिद्धमहा ॥ ७३२ ॥ प्रोक्तो 'राजनिघण्टे' च भिषक्शास्त्रविशारदैः । सरा कषाया शोफघ्नी कफपित्तविनाशिनी ॥ ७३३ ॥ आनाहोदरगुल्मघ्नी कटुः तृष्णाविषापहा । छर्दिकुष्ठकृमिघ्नी च श्वासदाहज्वरापहा ॥ ७३४ ॥ 'कैयदेवनिघण्टे' च वैद्यैः प्रोक्ता न संशयः ।

## ७० कासमर्द-कसौंदी, अगौथ ।

नामानि—कासमर्दस्तु कासारिस्त्वरिमर्दश्चदीपनः ॥ ७३५ ॥ कनकं जरणश्चैव कालश्च कालमर्दकः । 'धन्वंतरिनिघंटे' तु संप्रोक्तो भिषजांवरैः ॥ ७३६ ॥ कनकः कासकश्चैव कर्तकासघ्न एव च । कासमर्दिः कर्कशश्च 'कैयदेवे' प्रकीर्तितः ॥ ७३७ ॥ मर्दकः कंटकंटश्च 'द्रव्यारत्नाकरे' स्मृतः । अञ्जनो नातरश्चैव प्रोक्ता 'मदनपालके' ॥ ७३८ ॥ कोलं 'गणनिघण्टे' च प्रोक्तं वैद्य विचक्षणैः । त्रयोविंशतिसंख्याका प्रोक्ता सर्व भिषग्वरैः ॥ ७३९ ॥

गुणाः—कासमर्दस्तु तिक्तोष्णो मधुरः कफवातहा । अजीर्णकासपित्तघ्नः पाचनः कंठशोधनः ॥ ७५० ॥ 'राजनामनिघंटे' च 'धन्वे' पित्तकरः स्मृतः । विषकासहरः प्रोक्तः 'कैयदेवनिघंटके' ॥ ७५१ ॥ सरः शीतो विषूचिघ्नः 'द्रव्ये' च कफवातहृत् । तत्पत्रं तु भवेदुष्णं वृष्यं वातघ्नपाचनं ॥ ७५२ ॥ 'मदने' कविभिः प्रोक्तं 'भावे' पित्तविनाशनं ।

## ७१ आदित्यपत्र ।

नामानि—सुपत्रो विटपश्चार्कः कुष्ठारिस्तपनः छदः ॥ ७५३ ॥ रविप्रियो रश्मिपतिः सूर्यपत्रोऽर्कपत्रकः । आदित्यपत्रोऽर्कदलो प्रोक्तो

'राजनिघण्टके' ॥ ७५४ ॥ रुद्रसंख्या भिषक्श्रेष्ठैः संप्रोक्तो नैव संशयः ।

गुणाः—आदित्यपत्रं कटुरुष्णवीर्यं वातघ्नमेतत्कफनाशनं च ॥ ७५५ ॥ स्याद्दीपनं गुल्महरं तथैवारुच्यघ्नमुक्तं 'नृपनामके' च ॥

## ७२ श्वेताम्ली–श्वेत पिठोंडी, पर्पोटी ।

नामानि—श्वेताम्ली त्वम्लिका चैव पिष्टौंडी पिष्टिका तथा ॥ ७५६ ॥ श्वेताम्लपीडिका चैव प्रोक्ता 'राजनिघण्टके' । रससंख्येति संप्रोक्ता भिषक्शास्त्रविशारदैः ॥ ७५७ ॥

गुणाः—श्वेताम्ली मधुरा वृष्या पित्तघ्नी बलदायका ।

## ७३ नीलाम्ली-काली पिडोंडी ।

नामानि—नीलाम्ली चैव नीली च पिष्टौंडी दीर्घशाखिका ॥ ७५८ ॥ श्यामाम्ला 'राजनाम्नीति' प्रोक्ता वैद्यविचक्षणैः । 'द्रव्य-रत्नाकरे' चैव नीलाम्ला परिकीर्तिता ॥ ७५९ ॥

गुणाः—नीलाम्ला मधुरा रुच्या कफवातज्वरापहा ।

## ७४ अजगंधा–तिलवण ।

नामानि—अजगन्धा बस्तगंधा खरपुष्पाऽविगन्धिका ॥ ७६० ॥ उग्रगंधा ब्रह्मकर्मा ब्राह्मी पूतिमयूरिका । प्रोक्ता 'राजनिघण्टे' तु भिषक्विद्याविचक्षणैः ॥ ७६१ ॥ पशुगंधा च कवरी तथैव तु सुव-र्चला । ततस्तु शबरीगन्धा प्रोक्ता 'गणनिघण्टके' ॥ ७६२ ॥ तुङ्गी तु कावरी चैव प्रोक्ता 'धन्वंतरौ' ध्रुवं । पूतिकीटा बर्बरी च पूति-बर्बर एव च ॥ ७६३ ॥ तुंगी तुवरपुष्पीति प्रोक्ता 'मदनपालके' । शतपुष्पा पूतिगन्धा तथैव तु शकम्भरा ॥ ७६४ ॥ बर्बरा बर्बरीगंधा 'कैयदेवे' प्रकीर्तिता । चतुर्विंशतिसंख्याका संप्रोक्ता भिषजां वरैः ॥ ७६५ ॥

गुणाः—अजगन्धा कटुष्णा च वातगुल्महरा तथा । कर्णव्रण-शूलहन्त्री वातोदरविनाशिनी ॥७६६॥ पीताजगन्धा च 'नृपे' ह्यं जने हितकारिणी । हृद्याग्निवर्द्धिनी चैव दृष्टिमांद्यप्रदायका ॥ ७६७ ॥ शुक्रवृद्धिकरा वातकफहा 'मदने' स्मृतः ।

## ७५ आदित्यभक्ता—सूरजमुखी, हुरहुज ।

नामानि—आदित्यभक्ता वरदात्वर्कभक्ता सुवर्चला ॥ ७६८ ॥ अर्ककान्ता सूर्यलता सौरी मंडूकपर्णिका । सुतेजाऽर्कहिता चैव रवीष्टा सुरसम्भवा ॥ ७६९ ॥ मंडूकी सत्यनामा च देवी मार्तण्ड-वल्लभा । विक्रान्ता भास्करेष्टेति प्रोक्ता 'राजनिघण्टके' ॥ ७७० ॥ सूर्यकान्तादित्यभक्ता तथैव च सुखोद्भवा । आदित्यपर्णी संप्रोक्ता 'धन्वन्तरिनिघण्टके' ॥ ७७१ ॥ दिव्यतेजा शीतवृक्षो रविवल्ली रवौषधी । अर्कपुष्पी मूलपर्णी वृद्धिका तु रविप्रिया ॥७७२॥ 'कैयदेवे' तु संप्रोक्ता प्रार्या ब्रह्मसुवर्चला । रविक्रान्ता मंडुकी च तथैव च महौ-षधी ॥ ७७३॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता भिषजां वरैः । सूर्यावर्ता रविप्रीता प्रोक्ता 'मदनपालके' ॥ ७७४ ॥ सुकर्वला सूर्यभक्ता तथा चादित्यवल्लभा । कपोतवंका विख्याता प्रोक्ता 'गणनिघण्टके' ॥७७५॥

गुणाः—आदित्यभक्ता शिशिरा कटुस्तिक्ता भयापहा । त्वग्दोष-कंडुकुष्ठघ्नी भूतव्रणविनाशिनी ॥७७६॥ शीतज्वरहरा प्रोक्ता 'राजनाम निघण्टके' । शोफोष्णपांडुकुष्ठघ्नी वलासघ्नी 'गणे' स्मृता ॥७७७॥ मूत्रला तु 'मदे' प्रोक्ता पुरातनचिकित्सकैः । स्वर्या स्फोटहरा प्रोक्ता हिता चैव रसायनी ॥ ७७८ ॥ 'धन्वन्तरिनिघण्टे' च संप्रोक्ता वैद्य-नायकैः । पाके स्वादु रसे गुर्वी विष्टम्भी पित्तला तथा ॥ ७७९ ॥ कफवातहरा रूक्षा 'द्रव्यनामनिघण्टके' । अत्युष्णा लघु रूक्षा च सरा कफहरा तथा ॥ ७८० ॥ रक्तपित्तारुचिहरा श्वासकासज्वरा-पहा । विस्फोटकुष्ठमेहघ्नी चाश्मरीयोनिरोगजित् ॥ ७८१ ॥ कृच्छ्र-पांडुहरा प्रोक्ता 'कैयदेवे' भिषग्वरैः । कफवातामजन्तुघ्नी प्रोक्ता 'भाव-प्रकाशके' ॥ ७८२ ॥

## ७६ विषमुष्टिः—विषदोडी* ।

नामानि—विषमुष्टिः केशमुष्टिः सुमुष्टिरणुमुष्टिकः । क्षुपडो-

*विषदोड़ीका दूसरा नाम हत्थाजोड़ी है । इसके फलका आकार वैसा ही होता है जैसा हाथकी मुट्ठी बन्द करनेसे होता है । इसकी बेलिकी एक डण्डीमें दो दो जुड़े फल होते हैं । ये फल मन्दारके फलके समान बड़े और गोले होते हैं । इन्हें टोंचनेसे सफेद दूध निकलता है । इसके फल कड़वे होते हैं इसीसे विषमुष्टि कहलाते हैं । इसकी बेलि अकसर काली ज़मीनमें होती और फैलती है तथापि विस्तार अधिक नहीं होता । इसकी पत्तियां धौकी पत्तीके समान लम्बाई लिये होती हैं ।

डीति संप्रोक्ता भिषग्भिः 'राजनामके' ॥ ७८३ ॥ क्षुद्रमुंडी 'कैयदेवे' डोडी 'मदनपालके' । क्षुधाव्हा चैव संप्रोक्ता 'कैयदेवे' पुनस्तथा ॥ ७८४ ॥ अष्टसंख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ।

गुणाः—विषमुष्टिः कटुस्तीक्ष्णा दीपनी कफवातहा ॥ ७८५ ॥ कण्ठामयहरा रुच्या रक्तपित्तहरा तथा । दाहहा भिषजां नाथैः प्रोक्ता 'राजनिघण्टके' ॥ ७८६ ॥ मेहक्रिमिश्वासगुल्मान् मूषकाणां विषं तथा । अर्शान् हन्तीति कविभिः प्रोक्ता कैयनिघण्टके' ॥ ७८७ ॥

## ७७ डोडी ।*

नामानि—अन्याडोडी तु जीवन्ती शाकश्रेष्ठा सुखालुका । बहुपर्णी दीर्घपत्रा सूक्ष्मपत्रा च जीवनी ॥ ७८८ ॥ प्रोक्ता 'राजनिघण्टे' तु चाष्टसंख्या भिषग्वरैः ।

गुणाः—अन्याडोडी कटुस्तिक्ता चोष्णा स्यात् दीपनी तथा ॥ ७८९ ॥ कफवातहरा रुच्या कण्ठरोगविनाशिनी । रक्तपित्तहरा दाहनाशिनी 'राजनामके' ॥ ७९० ॥

## ७८ कालांजनी—काला कपास ।‡

नामानि—कालांजनी चांजनी च रेचनी त्वसितांजनी । नीलां-

---

*डोडीकी वेलि कोंकण ( महाराष्ट्र ) प्रान्तमें बहुत होती है। यह खूब फैलती है। इसकी पत्तियां गुर्चकी पत्तियोंके समान किन्तु ज़रा बड़ी होती हैं। इसकी दण्डीमें दो दो जोड़ी फल लगते हैं। इसके फलोंका आकार कुछ कुछ हत्थाजोड़ीके समान होता है। इन फलोंको भी टोंचनेसे सफेद दूध निकलता है। इसकी वेलि वृक्षों पर चढ़ती है। वैलका कन्धा लगा हो तो कन्धे पर इसकी पत्तियाँ रख जुआं रखनेसे दो तीन दिनोंमें कन्धा अच्छा हो जाता है।

‡काले कपासकी दो जाति होती हैं। १ काला कपास २ वेणी। काले कपासके बीज वन कपासके बीजोंके समान किन्तु काले होते हैं। इसकी पत्ती वेणीसे छोटी और चोटीकी ओर तीन भाग रहते हैं। इसके फूल कुछ तांबड़ी रङ्गके होते हैं। इसका कपास मध्य श्रेणीका होता है। वेणीका बीज लम्बाई लिये वेणीके समान रहता है। इसके पत्ते काले कपासके पत्तोंसे बड़े होते हैं और उसके पाँच भाग ऐसे होते हैं कि पाँच चोटीसे जान पड़ते हैं। इसका फूल पिलाई लिये रहता है। इसका फूल बत्ती बनानेके लिये अच्छा होता है किन्तु सूत कातनेके लिये उत्तम नहीं होता। इसके सिवाय तीसरे देवकपासके पत्ते काले कपासके पत्तोंसे छोटे और उनकी चोटीकी ओर पांच भाग होते हैं। इसके बीज हरापन लिये और फूल ललाई लिये रहते हैं। इसका धागा लम्बा और मज़बूत होता है। इसकी रुई सबसे अच्छी समझी जाती है।

जनी च कृष्णाभा काली कृष्णांजनी च सा ॥ ७६१ ॥

गुणाः—कालांजनी कटूष्णा स्यादम्लामक्रिमिरोधिनी । अपानावर्तशमनी जठरामय हा 'नृपे' ॥ ७६२ ॥ कृमिश्लेष्मोदरहरा हृद्रोगहारिणी 'द्रवे' ।

## ७९ कार्पासी-देवकपास ।

नामानि—कार्पासी सारिणी चव्या स्थूलापि बदरी पिचुः ॥ ७६३ ॥ मरुदूर्वा समुद्रान्ता बादरा तुंडिकेरिका । गुणसू 'राजनाम्नाति' संप्रोक्ता भिषजां वरैः ॥ ७०४ ॥ कार्पासाच्छादनफला पथ्याऽनघ्ना पटप्रदा । भद्रा वन्ध्यफला चैव कर्पासस्तु वरद्रुमः ॥ ७६५ ॥ स्थूलं पिचव्या विदिता बादरः 'कैयदेवके' । बदरी स्थूलपिचुरो 'द्रव्यरत्नाकरे' स्मृतः ॥ ७६६ ॥ आच्छादनी सोमवल्ली चक्रिका सेनिका 'गणे' । बामनी वासनी चैव विषघ्नी च महौजसी ॥ ७६७ पटतूलश्च संप्रोक्ता वैद्यविद्याविचक्षणैः ।

गुणाः—कार्पासी मधुरा शीता स्तन्या पित्तकफापहा ॥ ७६८ ॥ तृष्णादाहश्रमहरा भ्रांतिमूर्च्छाविनाशिनी । बलदेति भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघंटके' ॥ ७६९ ॥ तद्बीजं श्लेष्मलं स्निग्धं वृष्यं 'कैयनिघंटके' । तत्पत्रं वातहृद्रक्तनाशनं मूत्रवर्द्धनम् ॥ ८००॥ कर्णपीडा कर्णनादपूयस्रावविनाशनम् । 'भावप्रकाशे' संप्रोक्तं वैद्यविद्याविचक्षणैः ॥ ८०१ ॥

## ८० अरण्यकार्पासी ।

नामानि—वनजारण्यकार्पासी भारद्वाजी वनोद्भवा ।

गुणाः—भारद्वाजी हिमा रुच्या 'नृपे' शस्त्रव्रणापहा ॥ ८०२ ॥

## ८१ कोकिलाक्षः-तालिमखाना ।

नामानि—कोकिलाक्षः शृगाली च शृंखला रणकस्तथा । शृगालघंटी वज्रास्थिशृंखला व्रजकंटकः ॥ ८३ ॥ इक्षुरः क्षुरको वज्रः शृंखलीका पिकेक्षणः । पिच्छिला चेक्षुगन्धा च 'राजनामनिघंटके' ॥ ८०४ ॥ इक्षुरी चेक्षुबाला च इक्षुरस्तैलकंटकः । तथेक्षुगंधिका चैव बृहत्कोशा च खगटः ॥८०५॥ कलस्वशाली विज्ञेया 'कैयदेवे' प्रकीर्तिता । कोकिलश्च तथा 'द्रव्ये' प्रोक्तं वैद्यविशारदैः ॥ ८०६ ॥ तथा

'मदनपाले तु कांडेक्षुश्च क्षुरस्तथा । काकेक्षुर्भिक्षुकश्चैव वालिका इक्षुकस्तथा ॥ ८०७ ॥ प्रोक्ता 'भावप्रकाशे' च वैद्यविद्याविशारदैः ।

गुणाः—कोकिलाक्षस्तु मधुरः शीतपित्तातिसारजित् ॥ ८०८ ॥ वृष्यः कफहरो बल्यो रुच्यः संतर्पणो 'नृपे' । स्निग्धः पिच्छलवृष्यश्च वाततृष्णाश्मरीहरः ॥ ८०९ ॥ रक्तामवातहृत् प्रोक्तो 'कैयदेवनिघंटके' । मेहवातहरो 'द्रव्ये' 'भावे' शोथविनाशनः ॥ ८१० ॥ वातरक्त हरः प्रोक्तो पुरातनचिकित्सकैः ।

## ८२ सातला-पीतदुग्ध, सेहुंड ।

नामानि—सातला सप्तला सारी विदुला विमलाऽमला ॥८११॥ बहुफेना चर्मकषा फेनदीप्ता विषाणिका । स्वर्णपुष्पी पत्रघना प्रोक्ता 'राजनिघंटके' ॥ ८१२ ॥ विदला चर्मकर्षा च फेना दीप्ता मरालिका। सनालिका पीतदुग्धा तथैव तु सरालिका ॥ ८१३ ॥ 'कैयदेवनिघंटे' तु प्रोक्ता वैद्यविचक्षणैः । तथा 'मदनपाले' तु सम्यक्प्रोक्ता वनालिका ॥ ८१४ ॥ विदुला भूमिफेना च प्रोक्ता 'भावप्रकाशके' । आत्मनाला चर्मकोशा त्वमला 'गणनामके' ॥ ८१५ ॥ एकत्रिंशत्‌संख्यकेति प्रोक्ता शास्त्रविचक्षणैः ।

गुणाः—सातला कटु पित्तघ्नी लघु तिक्ता काषायका ॥ ८१६ ॥ विसर्पविषहंत्री च मेधाविस्फोटहारिणी । व्रणशोफहरा प्रोक्ता वैद्यै 'राजनिघंटके' ॥८१७॥ मूत्रकृच्छ्रहरा प्रोक्ता भिषग्भि 'र्गणनामके' । शोधना कफपित्तासृक्‌शोफोदरविनाशिनी ॥ ८१८ ॥ लघु मारुतकृत्प्रोक्ता 'धन्वे' दाहहरस्तथा । शीतला चैव तीक्ष्णा च तिक्ता चैव हृदिप्रिया ॥८१९॥ हृद्रोगकफहृच्चैव पित्तोदावर्तगुल्महा । उदरघ्नी गरहरा विषक्रिमिविनाशिनी ॥ ८२० ॥ शोथामारुचिहा 'कैये' प्रोक्ता रेचकत्रांतिकृत् ।

## ८३ कामवृद्धिः-कामवृक्ष । *

नामानि—स्मरवृद्धिः कामवृद्धिस्तथैव मदनायुधः ॥८२१॥ कन्दर्पजीवो कामोपजीवो चैव जितेंद्रियः । मनोजवृद्धिः संप्रोक्तो 'राजनामनिघंटके' ॥ ८२२ ॥

*कामज वृक्ष कर्नाटक देशमें बहुत होता है । इसके बीज अत्यन्त वृष्य होते हैं ।

गुणाः—कामवृक्षस्य बीज स्यान्मधुरं बलवर्द्धनं। कामवृद्धिकरं रुच्यं वह्विलेंद्रियवृद्धिदं ॥ ८२३ ॥

## ८४ चक्रमर्दः-चकौंड़ा, पंवाड़।

नामानि—एडहस्ती विमर्दश्च दद्रुघ्नः शकुनाशनः। चक्री चक्रगजश्चैव दृढबीजो प्रपुन्नटः ॥ ८२४ ॥ चक्रमर्दस्त्वेडगजो मेषाह्वो चैडहस्तिकः। व्यावर्तकश्चक्रगजश्चक्री पुन्नाट एव च ॥ ८२५ ॥ खर्जुघ्नस्तु गजाख्यश्च प्रोक्तं 'गणनिघंटके'। ततस्त्वेडगजश्चैव मेषा क्ष्वेडगजस्तथा ॥ ८२६ ॥ प्रपुन्नटश्च विख्यातो प्रोक्तो 'धन्वंतरौ' ध्रुवम्। क्ष्वेडकेऽडगजश्चैव क्ष्वेडको मर्दको मदा ॥ ८२७ ॥ चक्रिलो मेषकुसुमो 'कैयदेवनिघंटके'। तथा 'मदनपाले' तु संप्रोक्तो कुष्ठकृन्तनः ॥ ८२८ ॥ 'भावप्रकाशे' संप्रोक्तो पद्माटो मेषलोचनः। उरणाक्षस्तु 'कोशे' च कविभिः परिकीर्तितः ॥ ८२९ ॥

गुणाः—चक्रमर्दः कटुः प्रोक्तो मेदोवातकफापहा। व्रणकंडुकुष्ठदद्रुपामहा 'राजनामके' ॥ ८३० ॥ हिमो रुक्षोथहृद्यश्च स्वादुर्विष्टंभकारकः। मलमूत्रहरश्चैव पित्तानिलहरस्तथा ॥ ८३१ ॥ कफकुष्ठ ज्वरघ्नश्च श्वासकासादिमेदहा। अरुचिक्रिमिहन्तेति फलं तस्य कटूष्णकं ॥ ८३२ ॥ विषापहं तस्य शाकं मलघ्नं 'कैयदेवके'। त्रिदोषघ्नं तथा ग्राहि शिरोर्तिहरणं तथा ॥ ८३३ ॥ शोकोद्भवकफान् हन्ति 'द्रव्यरत्नाकरे' स्मृतं।

## झिंझिरीटा-भुरहुरी। *

नामानि—झिंझिरीटा कंटफली पीतपुष्पा च झिंझिरा ॥ ८३४ ॥ हुडरोमाश्रयफला वृत्ता 'राजनिघण्टके'। 'द्रव्यरत्नाकरे' चैव झिंझीसा परिकीर्तिता ॥ ८३५ ॥ सप्तसंख्येति संप्रोक्ता भिषक्शास्त्रपरायणैः।

गुणाः—झिंझिरीटा कटुः शीता कषाया चातिसारजित् ॥ ८३६ ॥ वृष्या संतर्पणी बल्या महिषीक्षीरवर्धिनी। प्रोक्ता 'राजनिघंटे' च वैद्यविद्या विशारदैः ॥ ८३७ ॥

*इसमें नोकदार घुंघची बराबर गोल, बहुतसे फल लगते हैं। ये फल चलते समय कपड़ोंमे लपट जाते हैं।

# ३ पर्पटादिवर्गः ।

## १ पर्पटः—पित्तपापडा ।

नामानि—पर्पटश्चरको रेणुस्तृष्णारिः खरको रजः । शीतः शीतप्रियः पांशुः कल्याणो वर्मकण्टकः ॥ ८३८ ॥ कुशशाखः पर्पटकः पित्तारिः रक्तपुष्पकः । सुतिक्तो कटुपत्रश्च कवचो राजनामके' ॥८३९॥ वरतिक्तो वर्मकंटो वरकस्त्वतिसारहा । ज्वरनाशनकश्चैव प्रोक्तो 'धन्वंतरौ' ध्रुवं ॥ ८४० ॥ 'कैयदेवनिघंटे' तु पित्तहा शिववल्लभः चर्माह्वयः सूक्ष्मपत्रो चर्मकंटक एव च ॥ ८४१ ॥ यवकंटस्तथ 'द्रव्ये' सूष्टिकः फलकंटकः । तथा 'गणनिघंटे' तु संस्मृतो धर्म खेटकः ॥ ८४२ ॥

गुणाः—पर्पटः शीतलस्तिक्तः पित्तश्लेष्मज्वरापहः । रक्तदाहारुचिग्लानिमदभ्रमहरो 'नृपे' ॥ ८४३ ॥ मुखरोगहरो प्रोक्तं वैद्यै 'र्गणनिघण्टके' । रसे पाके च तिक्ता स्यात् संग्राही वातलस्तथा ॥ ८४४ ॥ दाहच्छर्दिपिपासघ्नः 'कैये' च पित्तनाशनः । 'द्रव्यरत्नाकरे' प्रोक्तः पित्तमेहविनाशकृत् ॥ ८४५ ॥

## २ जीवक ।

नामानि—जीवको जीवनो जीव्यः शृङ्गावहः प्राणदः प्रियः मंगल्यश्चिरजीवी च मधुरः कूर्मशीर्षकः ॥ ८४६ ॥ ह्रस्वांगो वृद्धिदोऽयुष्मान् दीर्घायुर्जीवदस्तथा । बलदस्तु तथा प्रोक्तो 'राजनामनिघण्टके' ॥ ७४७ ॥ 'धन्वंतरिनिघंटे' तु शृंगकः कूर्चशीर्षकः । क्ष्वेडस्वादुः 'क्षीरजीवी' भिषग्भिः परिकीर्तितः ॥ ८४८ ॥ 'कैयदेवनिघण्टे' तु शर्मकूर्चक एव च । श्रेयस्तु जीववृक्षश्च संप्रोक्तो भिषग्वरैः ॥ ८४९ ॥

गुणाः—जीवको मधुरः शीतो रक्तपित्तानिलापहः । क्षयदाहहरश्चैव स्वरशुक्रविवर्द्धनः ॥ ८५० ॥ श्लेष्मवृद्धिकरश्चैव गर्भसंधानकारकः । प्रोक्तं 'राजनिघंटे' च वैद्यैर्विद्याविचक्षणैः ॥ ८५१ ॥

## ३ ऋषभक ।

नामानि—ऋषभो गोपतिर्धीरो विषाणी धूर्धरो वृषः । ककुद्मान् पुंगवो वोढा शृंगी धूर्यस्तु भूपतिः ॥ ८५२ ॥ कामी

ऋक्षप्रियश्चोक्तो लांगुली गोश्च बन्धुरः । गोरक्षो वनवासीति प्रोक्तो 'राजनिघंटके' ॥ ८५३ ॥ 'धन्वन्तरिनिघण्टे' तु दुर्धरो वृषभस्तथा । श्रीमान् वृषाणी ककुदो चिंद्राक्षो मातृकः स्मृतः ॥ ८५४ ॥ 'कैयदेवनिघण्टे' तु भिषग्भिः परिकीर्तितः । बद्धामयपतिश्चैव 'द्रव्यरत्नाकरे' स्मृतः ॥ ८५५ ॥

गुणाः—ऋषभो मधुरः शीतः पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरश्चैव दाहक्षयज्वरापहः ॥ ८५६ ॥ गर्भसंधानकारीति प्रोक्तो 'राजनिघंटके' ।

## ४ श्रावणी-छोटी मुण्डी ।

नामानि—श्रावणी स्यान्मुंडिनिका भिक्षुः श्रवणशीर्षकः ॥ ८५७ ॥ श्रवणा च प्रव्रजिता परिव्राजी तपोधनः । प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविचक्षणैः ॥ ८५८ ॥ मुंडिनीका श्रवण्याह्वा प्रोक्ता 'धन्वे' भिषग्वरैः । अलम्बुजा श्रवण्युक्ता कुलहूला च श्रीमती ॥ ८५९ ॥ चुंबला 'कैयदेवे' च 'द्रव्ये' प्रोक्ता तपोधना । क्षीरतिक्ता चकोरा च नीलहारा 'गणे' स्मृता ॥ ८६० ॥

गुणाः—श्रावणी तु कषाया स्यात् कटूष्णा कफपित्तजित् । आमातिसारकासघ्नी विषछर्दिहरा 'नृपे' ॥ ८६१ ॥ वातपित्तास्रहंत्री च तथामारुचिहारिणी । गंडापस्मारहंत्री च श्लीपदघ्नी 'धने' स्मृता ॥ ८६२ ॥ वीर्योष्णा चैव मेध्या च तथा वातकफापहा । अपचीप्लीहमेहघ्नी पांडुयोनिरुजापहा ॥ ८६३ ॥ कृच्छ्रहृत् क्रिमिहा प्रोक्ता 'कैयदेवनिघंटके । पाके कटुर्गुदार्तिघ्नी प्रोक्ता 'भावप्रकाशके' ॥ ८६४ ॥

## ५ महाश्रावणी—बड़ी मुण्डी, गोरखमुण्डी ।

नामानि—महाश्रावणिका चैव महामुण्डी च लोचना । कदम्बपुष्पा विकचा कोला चोडा पलंकषा ॥८६७॥ नदीकदम्बो मुण्डाख्या महामुंडिनिका तथा । छिन्ना ग्रन्थिनिका माता स्थविरा लोमिनी तथा ॥ ८६८ ॥ भूकदम्बाऽलम्बुजा च प्रोक्ता 'राजनिघण्टके' । 'धन्वन्तरौ' लोमनीया छिन्नग्रन्थिनिका स्मृता ॥ ८६९ ॥ 'कैयदेवनिघण्टे' तु गोच्छाला त्वरुणा तथा । तपोधना बोटवृद्धा वोढा प्रोक्ता भिषग्वरैः ॥ ८७० ॥ 'द्रव्यरत्नाकरे' चैव शोभनीया प्रकीर्तिता ।

'भावप्रकाशे संप्रोक्ता त्वव्यथाऽतितपस्विनी ॥ ८७१ ॥ कोलाहला त्वम्बुसा च शशका 'गणनामके' ।

गुणाः—महाश्रावणिका चोष्णा ईषद्गौल्या मरुच्छ्रवा ॥ ८७२ ॥ स्वरकृद्रोचनी तिक्ता मेहहृच्च रसायनी । 'राजनामनिघण्टे' च प्रोक्ता वैद्यविशारदैः ॥ ८७३ ॥

## ६ मेदा—मैदा ।

नामानि—मेदा वसा मणिच्छिद्रा जीवनी शल्यपर्णिका । मेदसारा स्नेहवती मेदिनी मधुरा वरा ॥ ८७४ ॥ स्निग्धा मेदोद्भवा साध्वी विषदा बहुरंध्रिका । नखच्छेद्या तथा प्रोक्ता 'राजनामनिघण्टके' ॥ ८७५ ॥ शल्यदा शल्यपर्णी च तथा पुरुषहन्तिका । 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ८७६ ॥ तथा 'मदनपाले' तु मणिक्षुद्रा भवाध्वरा । सुरा मेदसमुद्भूता धरणी मेहसंभवा ॥ ८७७ ॥ प्रोक्ता 'गणनिघण्टे' तु भिषक्शास्त्रपरायणैः ।

गुणाः—मेदा तु मधुरा शीता पित्तदाहार्तिकासनुत् ॥ ८७८ ॥ राजयक्ष्मज्वरहरा वातदोषकरी 'नृपे' । गुरु स्तन्या वातपित्तनाशिनी 'धन्वनामके' ॥ ८७९ ॥ बलासशुक्रकृच्चैव बृंहणं 'केयदेवके' । वातपित्तास्रहृच्चैव क्षतक्षयहरा तथा ॥ ८८० ॥ रक्तवातहरा चैव प्रोक्ता 'भावप्रकाशके' ।

## ७ महामेदा-बड़ी मेदा ।

नामानि—महामेदा वसुच्छिद्रा जीवनी पांशुरागिणी ॥ ८८१ ॥ देवेष्टा सुरमेदा च दिव्या देवमणिस्तथा । देवगन्धा महाच्छिद्रा वृक्षार्हा 'राजनामके' ॥८८२॥ मणिछिद्रा वृक्षरुहा महापुरुषदंतिका । 'केयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ८८३ ॥ तथा 'मदनपाले' तु त्रिदन्ती देवतामणिः । प्रोक्ता षोडशसंख्येति भिषक्शास्त्रविशारदैः ॥ ८८४ ॥

गुणाः—महामेदा हिमा रुच्या कफशुक्रविवर्द्धिनी । रक्तदाहहरा चैव पित्तक्षयनिवारिणी ॥ ८८५ ॥ वातज्वरहरा चैव प्रोक्ता 'राजनिघण्टके' ।

## ८ ऋद्धिः ।

नामानि—ऋद्धिः सिद्धिः प्राणदा च जीवदात्री तु श्रेयसी

॥ ८८६ ॥ अपांगी चेतनी योग्या रथांगी मङ्गला तथा । कोलकान्ता यशस्या च जीवश्रेष्ठेति 'राजके' ॥ ८८७ ॥ रथांगं मङ्गलं चैव वसु-'र्धन्वन्तरौ' स्मृतं । आश्वासनी तुष्टिराशी चेतना च पयस्विनी ॥८८८॥

## ९ वृद्धिः ।

नामानि—वृद्धि स्तुष्टिः पुष्टिदा श्री मङ्गल्या वृद्धिदात्रिका । जनेष्टा सम्पदा लक्ष्मीर्भूतिरुत्सव एव च ॥ ८८६ ॥ जीवभद्रा भिषक्-श्रेष्ठैः प्रोक्ता 'राजनिघण्टके' । ऋषिश्रेष्ठा युगयोग्या लक्ष्मीः सर्व-जनप्रिया ॥ ८६० ॥ 'धन्वन्तरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । सुखा तु शोधिनी चैव श्रावणी च सुयोग्यदा ॥ ८६१ ॥ विभूतिर्मधुरा चैव प्रियो मङ्गल एव च । 'कैयदेवनिघंटे' तु सप्तविंशतिसंख्यका ॥ ८६२ ॥

गुणाः—ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा तिक्तशीतला । रुचि-मेधाकरी श्लेष्मकुष्ठक्रिमिहरा 'नृपे' ॥ ८६३ ॥ क्षयपित्तानिलहरा रक्तज्वरविनाशिनी । कफशुक्रप्रदा चैव प्रोक्ता 'धन्वन्तरौ' ध्रुवं ॥ ८६४ ॥ त्रिदोषमूर्च्छाहन्त्री च रक्तपित्तहरा तथा । गर्भवृद्धिप्रदा चैव प्रोक्ता 'कैयनिघण्टके' ॥ ८६५ ॥ ऋद्धिर्दानादिनिन्द्या च प्रोक्ता 'गणनिघण्टके' ।

## १० धूम्रपत्रा-गन्धाणी, कीडामारी ।

नामानि—धूम्रपत्रा तु धूम्राह्वा सुलभा च स्वयंभुवा ॥ ८६६ ॥ गृध्रपत्रा च गृध्राणी कृमिघ्नी स्त्रीमलापहा । अष्टसंख्या 'नृपे' प्रोक्ता भिषग्भिः शास्त्रवित्तमैः ॥ ८६७ ॥

गुणाः—गृध्राणी तु रसे तिक्ता शोफक्रिमिविनाशिनी । उष्णा कासहरा रुच्या दीपनी 'राजरामके' ॥ ८६८ ॥

## ११ प्रसारिणी ।

नामानि—प्रसारिणी सुप्रसरा सारणी सरणी सरा । चारु-पर्णी राजबला भद्रपर्णी प्रतानिका ॥ ८६६ ॥ प्रबला राजपर्णी च बल्या भद्रबला तथा । चन्द्रवल्ली प्रभद्रा च 'राजनामनिघण्टके' ॥ ६०० ॥ प्रहिता भद्रकाली च 'कैये' प्रातानिका तथा । तथा 'मदन-

पाले' तु प्रसरा परिकीर्तिता ॥ ६०१ ॥ प्रोक्ता 'भावप्रकाशे' तु प्रतानिनी कटंभरा ।

गुणाः—प्रसारिणी गुरूष्णा च तिक्ता वातार्शहा तथा ॥६०२॥ श्वयथूमलहारा च विष्टंभहारिणी 'नृपे' । कफहन्त्रीति संप्रोक्ता 'मदने' वैद्यनायकैः ॥ ६०३ ॥ सरा सन्धानकृच्चैव त्रिदोषघ्नी च वृष्यदा । बलतेजःकान्तिकरा प्रोक्ता 'धन्वनिघंटके' ॥ ६०४ ॥ रसे तिक्ता च वीर्योष्णा शुक्रला वातरक्तहा । त्रिदोषघ्नी 'कैयदेवे' प्रोक्ता वैद्यैर्न संशयः ॥ ६०५ ॥

## १२ पाषाणभेदी-पाषाणभेद ।

नामानि—पाषाणभेदोऽश्मघ्नश्च शिलाभेदोऽश्मभेदकः । श्वेता चोत्पलभेदी च नगभिच्छलिगर्भकः ॥ ६०६ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यशास्त्रपरायणैः । पाषाणभेदी पाषाणस्तथैवाश्मनिभेदकः ॥६०७॥ अश्मभेदनसंज्ञश्च नगभेदन एव च । प्रोक्ता 'मदनपाले' तु भिषक्विद्याविचक्षणैः ॥ ६०८ ॥ तथा भावप्रकाशे' तु गिरिभित् परिकीर्तितः । दृषद्भेदः प्रस्तरश्च नगभेदक एव च ॥ ६०९ ॥ अश्मरीभेदकश्चैव प्रोक्ता 'कैयनिघण्टके' ।

गुणाः—पाषाणभेदो मधुरस्तिक्तो मेहतृषाहरः ॥ ६१० ॥ प्रोक्तं राजनिघंटे' तु वैद्यविद्याविशारदैः । 'कैयदेवे' हिमो भेदी योनिरोगविनाशनः ॥६११॥ मूत्ररोगहरश्चैव व्रणदोषहरस्तथा । गुदभ्रंशहरश्चैव 'गणे' प्रोक्ता भिषक्जनैः ॥ ६१२ ॥ शूलकृच्छ्रत्रिदोषघ्नो मेहहृद्रोगप्लीहहा । गुल्मार्शनाशनश्चैव बस्तिशुद्धिकरस्तथा ॥ ६१३ ॥ शर्कराश्मिश्शूलघ्नः प्रोक्तो 'धन्वंतरौ' ध्रुवम् । शोफहृद्रोगहा 'भावे' 'मदने' तु सरः स्मृतः ॥ ६१४ ॥

## १३ वटपत्री पाषाणभेदी-वडवती पाषाणभेदी ।

नामानि—अन्या तु वटपत्रीस्यात्तथा ऐरावती च सा । गोधावती रावती च श्यामा खट्वांगनामिका ॥ ६१५ ॥ प्रोक्ता 'राजनिघंटे तु भिषक्शास्त्रपरायणैः । सुस्वातिका रेवती च मोहनी 'कैयदेवके' ॥६१६ ॥

गुणाः—वटपत्री हिमा गौल्या मेहकृच्छ्रविनाशिनी । बलदा व्रणहन्त्री च दीपनी 'राजनामके' ॥ ६१७ ॥ योनिदोषहरा चैव मूत्र-

रोधहरा तथा । तत्फलं मधुरं रूक्षं स्तंभनं लेखनं ध्रुवं ॥ ६१८ ॥ कफपित्तहरं चैव विबंधाध्मानकृत्तथा । क्षुद्रं ग्राही पित्तजिच्च प्रोक्तं 'कैयनिघंटके' ॥ ६१९ ॥ स्तंभनं वातलं शीतं मदने परिकीर्तितं ।

## १४ श्वेतशिला-सफेद पाषाणभेद ।

नामानि—श्वेताशिला वल्कला च शिलाजा शैलवल्कला ।६२०। वल्का तु शैलगर्भ।वहा शिलात्वक् 'राजनामके' ।

गुणाः—शिलावल्कं हिमं स्वादु मेहकृच्छ्रविनाशनं ॥ ६२१ ॥ मूत्ररोधाश्मरीशूलक्षयपित्तापहारकं ।

## १५ क्षुद्रपाषाणभेदा-क्षुद्रपाषाणभेद ।

—नामानि—क्षुद्रपाषाणभेदान्या चतुःपत्री च पार्वती ॥ ६२२ ॥ नगभूश्चश्मकेतुश्च गिरिभूः कंदरोद्भवा । शैलोद्भवा च गिरिजा नगजा 'राजनामके' ॥ ६२३ ॥ दशसंख्येति संप्रोक्ता भिषक्शास्त्रपरायणैः ।

गुणाः—व्रणघ्नी तु 'नृपे' प्रोक्ता मूत्रकृच्छ्राश्मरीहरा ॥ ६२४ ॥

## १६ गृहकन्या-ग्वारपाठा ।

नामानि—गृहकन्या कुमारी च कन्यका दीर्घपत्रिका । स्थलेरुहा मृदुःकन्या बहुपत्रामराऽजरा ।। ॥ ६२५ ॥ कंटकप्रावृता वीरा भृंगेष्टा विपुलश्रवा । ब्रह्मघ्नी तरुणी रामा कपिला चांबुधिश्रवा ॥ ६२६ ॥ सुकंटका स्थूलदला प्रोक्ता 'राजनिघंटके' । माता च मण्डला चैव फलमत्स्याऽक्षकारका ॥ ६२७ ॥ 'कैयदेवनिघण्टे' तु भिषक्श्रेष्ठैः प्रकीर्तिता । 'द्रव्यरत्नाकरे' चैव संप्रोक्ता त्वतिपित्तला ॥ ६२८ ॥ तथा घृतकुमारी तु प्रोक्ता 'भावप्रकाशके' । सप्तविंशतिसंख्याका संप्रोक्ता भिषजांवरैः ॥ ६२९ ॥

गुणाः—गृहकन्या हिमा तिक्ता कासपित्तकफापहा । विषकुष्ठश्वासहरा 'नृपे' प्रोक्ता रसायनी ॥ ६३० ॥ यकृत्पित्तहरा चैव गलरोगहरा तथा । बृंहणी चैव बल्या च त्वगामयहरा 'नृपे' ॥ ६३१ ॥ भेदिनी ग्रंथिनी चैव ह्यग्निदग्धव्रणापहा । विस्फोटरक्तपितघ्नी 'कैये' कफज्वरापहा ॥ ६३२ ॥ 'द्रव्ये' सरा प्लीहहरा 'भावे' नेत्र्या स्मृता बुधैः ।

## १७ बर्हिचूडा-मोरपंखी ।

नामानि—शिखिनी बर्हिचूडा स्यात् शिखालुः सुशिखा शिखा ॥ ६३३ ॥ केकीशिखा मयूरस्य शिखेति 'राजनामके' । 'द्रव्यरत्नाकरे' चैव मधुराऽह्वा मधुच्छदा ॥ ६३४ ॥ मयूराऽह्वा सहस्रा च प्रोक्ता 'मदनपालके' । सहस्राक्षो नीलकंठशिखा 'भावप्रकाशके' ॥ ६३५ ॥

गुणाः—बर्हिचूडा रसे स्वादु मूत्रकृच्छ्रहरा तथा । बालग्रहहरा चैव वश्यकर्मप्रदा 'नृपे' ॥ ६३६ ॥ 'द्रव्ये' कफातिसारघ्नी पित्तश्लेष्मातिसारजित् ।

## १८ क्षीरिणी-पिसैारा ।

नामानि—क्षीरिणी कांचनक्षीरी कर्षणी कटुपर्णिका ॥ ६३७ ॥ तिक्तदुग्धा हैमवती हिमदुग्धा हिमावती । हिमाद्रिजा पीतदुग्धा यवचिंची हिमोद्भवा ॥ ६३८ ॥ हैमी तु हिमजा चैव प्रोक्ता 'राजनिघंटके' । घर्षणी हेमदुग्धेति प्रोक्ता 'धन्वंतरौ' ध्रुवम् ॥६३९॥ यवचित्रा कांचनी च 'कैयदेवे' स्मृता बुधैः । अष्टभूसंख्यका प्रोक्ता भिषक्शास्त्रविशारदैः ॥ ६४० ॥

गुणाः—क्षीरिणी तिक्तशीता च रेचिनी शोफघातहा । कृमिकफहरा चैव पित्तज्वरहरा 'नृपे' ॥ ६४१ ॥

## १९ स्वर्णक्षीरी-सत्यानाशी, घमोय ।

नामानि—स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाऽह्वा रुक्मिणी तथा । सुवर्णहेमदुग्धी च हेमक्षीरी तु कांचनी ॥६४२॥ प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविचक्षणैः । सुवर्णक्षीरी हेमांगा तथा कनकक्षीरिका ॥ ६४३ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजां वरैः । क्षीरगर्भा दुग्धिकेति 'द्रव्यरत्नाकरे' स्मृता ॥ ६४४ ॥ हेमाऽह्वा हेमदुग्धा च तथा हेमावती 'मदे' । पटुपर्णी हैमवती पीतदुग्धा च चोककः ॥ ६४५ ॥ प्रोक्ता 'भावप्रकाशे' तु भिषक्विद्याविचक्षणैः । प्रोक्ता 'गणनिघंटे' तु भिषग्भिस्तिक्तदुग्धिका ॥ ६४६ ॥ विंशत्संख्या भिषग्भिस्तु प्रोक्ता शास्त्रविचक्षणैः ।

गुणाः—स्वगणीरी हिमा तिक्ता कृमिपित्तकफापहा ॥ ६४७ ॥ मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरा 'नृपे' । उत्क्लेशकारिणी चैव 'मदे' मदकरा स्मृता ॥ ६४८ ॥ विषपित्तहरा चैव रक्तपित्तहरा 'धने' । कंडूहरा 'कैयदेवे' रक्तानाहहरा तथा ॥ ६४९ ॥ कामलाघ्नी तथा प्रोक्ता वैद्यविद्याविशारदैः । वातास्रहा 'द्रव्यरत्ने' पांडुहा 'गणनामके' ॥ ६५० ॥

## १९ त्रायमाणा–त्रायमाण ।

नामानि—त्रायमाणा कृतत्राणा त्रायंती त्रायमाणिका । बलभद्रा सुकामा च वार्षिकी गिरिजानुजा ॥ ६५१ ॥ मंगल्याह्वा देवबला पालिनी भयनाशिनी । अवनी रक्षणी त्राणा संप्रोक्ता 'राजनामके' ॥ ६५२ ॥ बलदेवा तु विदिता तथैव गिरिसानुजा । 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजांवरैः ॥ ६५३ ॥ आर्द्राद्रिसानुजा चैव तथा वार्षिकत्राणिका । 'कैयदेवे' तु संप्रोक्ता सुदला च सुतानिका ॥ ६५४ ॥ 'द्रव्यरत्नाकरे' चैव सुहृत्संज्ञा प्रकीर्तिता । तथा 'त्वमरकोशे' तु प्रोच्यते बलभद्रिका ॥ ६५५ ॥

गुणाः—त्रायमाणा भवेच्छीता मधुरा गुल्महा तथा । रक्तज्वरकफघ्नी च भ्रमतृष्णाक्षयापहा ॥ ६५६ ॥ ग्लानिहा विषछर्दिघ्नी प्रोक्ता 'राजनिघंटके' । कटुः पित्तास्रशूलघ्नी प्रोक्ता 'धन्वनिघंटके' ॥ ६५७ ॥ हृद्रोगरक्तगुल्मघ्नी पित्तहा 'कैयदेवके' । 'मंदे' वैद्यैः सरा प्रोक्ता कफपित्तहरा 'गणे' ॥ ६५८ ॥

## २० रुदंती-रुद्रवंती ।

नामानि—रुदंती तु स्रवत्तोया संजीवन्यमृतस्रवा । रोमांचिका महामांसी चणपत्री सुधाश्रवा ॥ ९५९ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्‌विद्याविशारदैः ।

गुणाः—रुदंती तु कटुस्तिक्ता कषाया चोष्णकारका ॥ ९६० ॥ रक्तपित्तक्रिमिहरा कफश्वासविनाशिनी । रसायनी मेहहरा 'राजनामनिघंटके' ॥ ९६१ ॥

## २१ ब्राह्मी ।

नामानि—ब्राह्मी सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला । कपोतवेगा वैधात्री दिव्यतेजा महौषधी ॥ ९६२ ॥ स्वायंभुवी सौम्य-

लता सुरेज्या ब्रह्मकन्यका । मंडूकमाता मत्स्याक्षी मण्डूकी सुरसा तथा ॥ ९६३ ॥ मेध्या वीरा भारती च वरा तु परमेष्ठिनी । दिव्या च शारदा चैव प्रोक्ता 'राजनिघंटके' ॥ ९६४ ॥ सोमा कपोतवंका च त्वष्ट्री ब्रह्मसुवर्चसा । 'धन्वंतरिनिघंटे' तु भिषग्भिः परिकीर्तिता ॥ ९६५ ॥ तथा सत्यवती चैव स्मरणी ब्रह्मचारिणी । सत्यनामा ब्रह्मसोमा ततो मंडूकपर्णिका ॥ ९६६ ॥ ब्राह्मणी तु सुनामा च मुनिका मण्डुरच्छदा । त्वाष्ट्री दिव्या तथा मेध्या वयस्था च कपोतका ॥ ९६७ ॥ सोमवल्ली 'कैयदेवे' प्रोक्ता कंकोलपर्ण्यका । 'द्रव्यरत्नाकरे' प्रोक्ता दिव्यतेजा भिषक्जनैः ॥ ९६८ ॥ लावण्या च तथा द्रव्या 'मदने' परिकीर्तिता । धीरा शंखधरा प्रोक्ता 'त्वमरे' च भिषग्जनैः ॥ ९६९ ॥

गुणाः—ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तहा । प्रज्ञामेधाकरा प्रोक्ता वैद्यैः 'राजनिघंटके' ॥९७०॥ मेध्या स्वर्या च पाके स्यात् स्वादु हृद्या मतिप्रदा । स्मृतिप्रज्ञाऽरुचिघ्नी च मलघ्नी विषहा तथा ॥ ९७१ ॥ श्वासकासास्रमोहघ्नी पांडुहा 'कैयदेवके' । रसे तिक्ता शोफपांडुज्वरहा दीपनी तथा ॥ ९७२ ॥ कुष्ठकंडूप्लीहहरा वातहा च बलासहृत् । प्रोक्ता 'धन्वंतरौ' वैद्यै'र्मदे' चैव सरा स्मृता ॥९७३॥ रक्तमेहज्वरहरा प्रोक्ता 'भावप्रकाशके' ।

## २२ जलब्राह्मी-जलनीम ।

नामानि—ब्राह्मी तु क्षुद्रपत्रान्या लघुब्राह्मी जलोद्भवा ॥ ९७४ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविचक्षणैः । हिलमोची शङ्खधरा जलब्राह्मी तथैव च ॥ ९७५ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः सम्प्रोक्ता नैव संशयः । बांबी वामी फेनिला च जलजा हिलमोचिका ॥ ९७६ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता रुद्रसंख्यका ।

गुणाः—बांबी तिक्ता रसे चोष्णा सरामानिलहा 'नृपे' ॥९७७॥ शोफकुष्ठव्रणघ्नी च 'कैये' पित्तकफापहा ।

## २३ वन्दाक-बन्दालु ।

नामानि—वन्दाकः पादपरुहा शिखरी तरुरोहिणी ॥ ९७८ ॥ वृक्षादनी वृक्षरूढा कामवृक्षस्तु शेखरी । केशरूपा तरुरुहा तरुस्था गन्धमोहिनी ॥ ९७९ ॥ कामिनी तरुरुक् श्यामा क्षुपदी 'राजनामके' ।

वन्दारुः स्याद्वृक्षरुहा तथैव पद्मरूपिणी ॥ ६८० ॥ 'धन्वन्तरिनिघण्टे' तु संप्रोक्ता भिषजां वरैः । कामना नीलवर्णी च नीलवल्ली जयद्रुमा ॥ ६८१ ॥ जीवन्ती तु तथा प्रोक्ता 'कैये' तु पद्मरोहिणी । तथा 'भावप्रकाशे' तु वृक्षभक्षा प्रकीर्तिता ॥ ६८२ ॥ द्रुमरुहा नररुहा कामाता चन्द्रका 'गणे' ।

गुणाः—वन्दाकस्तु भवेत्तिक्तः शिशिरः कफपित्तजित् ॥ ६८३ ॥ श्रमहृत् सिद्धिदो वृष्यो 'नृपे' प्रोक्तो रसायनः । 'धन्वन्तरिनिघंटे' तु संप्रोक्तो व्रणरोपणः ॥ ६८४ ॥ कफवातहरः प्रोक्तो 'कैये' रक्तविषापहः ।

## २४ अरण्यकुलत्थिका—वनकुलथी ।

नामानि—ततोरण्यकुलित्था च कुलाली कुम्भकारिका ॥६८५॥ चक्षुष्या तु कुलित्था च लोचने हितकारिका । दृक्प्रसादेति संप्रोक्ता भिषग्भि'र्नृपनामके' ॥ ६८६ ॥ 'धन्वन्तरिनिघंटे' तु वैद्यैः प्रोक्ता मलापहा । 'कैयदेवनिघंटे' तु कुकारी चिपिटा स्मृता ॥ ६८७ ॥ दृशसंख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ।

गुणाः—कुलत्था लोचनहिता तिक्ताऽर्शोशूलहा कटु ॥ ६८८ ॥ विबन्धाध्मानहृद् 'राज्ञि' चक्षुष्या व्रणरोपिणी । नेत्रस्रावहरश्चैव चरस्थिरविषापहा ॥ ६८९ ॥ विस्फोटनेत्रकंडूहा नेत्रव्रणहरा 'धने'। अर्शोहिक्कास्रहा प्रोक्ता 'गणनामनिघंटके' ॥ ६९० ॥

## २५ तन्दुलीयक—चौराई ।

नामानि—तन्दुलीयस्तन्दुली च तन्दुलीयकग्रन्थिलौ । बहुवीर्यो मेघनादो सुशाकस्तु घनस्वनः ॥६९१॥ पथ्यशाकस्तु स्फूर्जन्यः स्वनिताव्हस्तथैव च । वीरस्तु तन्दुलश्चैव प्रोक्तो 'राजनिघंटके' ॥६९२॥ पिंडिरस्तु घनश्चैव ततस्तन्दुललम्बिका । 'धन्वन्तरिनिघंटे' तु संप्रोक्ता भिषजां वरैः ॥ ६९३ ॥ चांडालस्तु खटालश्च कांडीरस्तन्दुली तथा । विषघ्नो मार्षिकश्चैव मारीषः 'कैयदेवके' ॥ ६९४ ॥ ततो 'मदनपाले' तु माषिकः परिकीर्तितः । 'भावप्रकाशे' संप्रोक्तो भिषग्भिस्त्वल्पमारिषः ॥ ६९५ ॥

गुणाः—तन्दुलीयस्तु शिशिरो मधुरो विषनाशनः । रुचिकृद्दीपनः पथ्यः पित्तदाहभ्रमापहः ॥ ६९३ ॥प्रोक्तो 'राजनिघण्टे' तु

वैद्यविद्याविचक्षणैः। असृक्ज्वरहरश्चैव प्रोक्तो 'गणनिघंटके' ॥९९७॥ रक्तपित्तहरो रुक्षो रसे पाके मधु'र्धने'। मदपित्तविषासृग्घ्नो 'कैये' स्यात्सृष्टमूत्रजित् ॥९९८॥ ततः सृष्टमलघ्नश्च 'मदे' प्रोक्तो भिषक्जनैः।

## २६ चिविल्लिका-छोटी लोनियां।

नामानि—"चिविल्लिका रक्तदला खरच्छदा स्यात्क्षुद्रघोली सदुमाभपत्रिका*" ॥ ९९९ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः। दलग्रलोहिता चिल्ली मधुपत्रा तथैव च ॥ १००० ॥ चीरपत्रा क्षीरदला वास्तुकी 'धन्वनामके'। बृहद्दला तु रक्ता च गौड़वास्तुक 'द्रव्यके' ॥ १ ॥ तथा 'मदनपाले' तु सम्यक् प्रोक्ता महद्दला।

गुणाः—चिल्ली कटुः कषाया च जीर्णज्वरहरा तथा ॥ २ ॥ रसायनीति संप्रोक्ता 'राजनामनिघंटके'। सरा शीता प्लीहहा च रक्तजित् क्रिमिहारका ॥ ३ ॥ त्रिदोषघ्नी 'मदे' प्रोक्ता भिषग्भिः शास्त्रवेतृभिः। श्लेष्मपित्तप्रमेहघ्नी मूत्रकृच्छ्रहरा तथा ॥ ४ ॥ 'धन्वन्तरिनिघंटे' च संप्रोक्ता रुचिकारिणी। अग्निवृद्धिकरा 'द्रव्ये' 'भावे' वातहरा तथा ॥ ५ ॥ श्लेष्महृत् पुष्टिकृच्चैव फलमत्स्यनिषूदनं।

## २७ हस्तिशुण्डी-हाथीशुण्डा।

नामानि—हस्तिशुंडी महाशुंडी शुंडी धूसरपत्रिका ॥ ६ ॥

गुणाः—हस्तिशुंडी तु कृष्णा च सन्निपातज्वरापहा। प्रोक्ता 'राजनिघंटे' तु पुरातनभिषग्वरैः ॥ ७ ॥

## २८ कुटुंबिनी-अन्धाहूली†

नामानि—कुटुंबिनी पयस्या च क्षीरिणी जलकामुका। वक्रशल्या दुराधर्षा क्रूरकर्मा झिरिंटिका ॥ ८ ॥ शीता प्रहारजाया

---

*वृत्त-भेदो वर्ततेऽत्र।

†अन्धाहूलीकी वेलि गुर्चकी बेलिके समान मोटी होती है। इसकी छाल जामुनी रङ्गकी और पत्ते पीपलके समान किन्तु जरा चौड़े होते हैं। पत्ते तोड़ने से सफेद दूध निकलता है। इसकी डण्ठीमें दो बोड लगते। ये छिगुनियाके समान मोटे और दोधारके होते हैं। इनमें रेशमके समान रुई निकलती है।

च शीतला तु जलेरुहा। प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रविशारदैः॥ ६॥ अर्कपुष्पी वज्रशल्या दुरामोघा भिरिंटिका। केयदेवनिघंटे' तु संप्रोक्ता भिषजां वरैः॥ १०॥ ततो 'मदनपाले' तु जलकामाऽभिरेणुका। पयस्था जलकामा च चित्रशल्या दुरामया॥ ११॥ एकविंशतिसंख्येति प्रोक्ता वैद्यविचक्षणैः।

गुणाः—कुटुंबिनी तु मधुरा ग्राहिणी कफपित्तहा॥ १२॥ कंडूरक्तव्रणहरा 'नृपे' प्रोक्ता रसायनी।

## २९ स्थलपद्मिनी-स्थलकमलनी।

नामानि—सुगंधमूला पद्माव्हा तथैव स्थलपद्मिनी॥ १३॥ तथैवांबुरुहा चेति चारटी पद्मचारिणी। लक्ष्मीश्रेष्ठा तु लक्ष्मी च रम्या चैव सुपुष्करा॥ १४॥ चरस्थलरुहा चैव तथा पद्मावती मता। ततः पुष्करवर्णी च तथा पुष्करिणी मता॥१५॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रपरायणैः। गंधमूलातिपत्रा च पद्मचारी सुपुष्कला॥ १६॥ 'धन्वंतरिनिघंटे' तु संप्रोक्ता भिषजांवरैः। 'द्रव्यरत्नाकरे' चैव वर्तकी परिकीर्तिता॥ १७॥ व्यथा त्वतिवसा चैव वारटी 'मदने' स्मृता। तथा त्वतिचरा चैव प्रोक्ता 'भावप्रकाशके'॥ १८॥ चतुर्विंशतिसंख्याका प्रोक्ता वैद्यविचक्षणैः।

गुणाः—तिक्ता शीता च वातघ्नी रक्तपित्तहरा तथा॥ १९॥ मेहातिसारहा प्रोक्ता 'राजनामनिघंटके'। उष्णा कटुः कफोद्भूतवातहा मूत्रकृच्छ्रजित्॥२०॥ अश्मरीशूलविषहा श्वासकासहरा 'भवे' मोहापस्मारहा प्रोक्ता 'धन्वंतरिनिघंटके'॥ २१॥ श्लेष्मश्वासास्रकृच्छ्रघ्ना 'मदे' प्रोक्ता भिषग्जनैः। 'गणनामनिघंटे' तु शूलघ्ना परिकीर्तिता॥ २२॥ तृष्णादाहप्रशमनी 'द्रव्यरत्नाकरे' स्मृता।

## ३० नागदमनी-नागदमन।

नामानि—जंबूजांबवती वृत्ता वृत्तपुष्पा च जांबवी। मदघ्नी नागदमनी दुर्धर्षा दुःसहा तथा॥ २३॥ प्रोक्ता 'राजनिघंटे' तु भिषग्भिः शास्त्रवित्तमैः। महा योगेश्वरी चैव तथा योगेश्वरीश्वरी॥ २४॥ नागदंती नागपत्री रास्ना सर्वभयापहा। सर्वगंधा सर्वसहा विषदंष्ट्रा विषापहा॥ २५॥ 'केयदेवनिघंटे' तु संप्रोक्ता भिषजांवरैः।

दमनी नागगंधा च नागा भुजगपर्णिका ॥ २६ ॥ 'द्रव्यरत्नाकरे' चैव भिषग्भिः परिकीर्तिता । प्रोक्ता 'मदनपाले' तु नागपत्रा भुजंगिनी ॥ २७ ॥ बलामोटा नागपुष्पी प्रोक्ता 'भावप्रकाशके' ।

गुणाः—ततस्तु नागदमनी तिक्तोष्णा च त्रिदोषहा ॥ २८॥ कटुतिक्तोदराध्मानहारिणी कोष्ठशोधिनी । 'राजनामनिघंटे' तु प्रोक्ता वैद्यैर्न संशयः ॥ २९ ॥ मोहापस्मारदोषघ्नी 'धन्वंतरिनिघंटके' । तृष्णादाहहरा प्रोक्ता 'द्रव्यनामनिघंटके' ॥ ३० ॥ व्रणरक्षोग्रहघ्नी च सर्पोद्भवविषापहा । लूताज्वालागर्दभघ्नी प्रोक्ता 'कैयनिघंटके' ॥ ३१ ॥ कफवातहरा प्रोक्ता वैद्यै 'र्द्रव्यनिघंटके' । जयंकरा च धनदा 'भावे' च सुमतिप्रदा ॥ ३२ ॥ कोष्ठशूलंहरा चैव योनिदोषहरा 'गणे' ।

## ३१ नागदंती-नागाली ।

नामानि—नागदंती श्वेतघंटा मधुपुष्पी विशोधनी ॥ ३३ ॥ नागस्फोटा विशालाक्षी नागछत्रा विचक्षणा । सर्पपुष्पा शुक्लपक्षी स्वादुका शीतदंतिका ॥ ३४ ॥ सितपुष्पी सर्पदंती नागिनी 'राजनामके' । नागविन्नाश्वेतदंता एकपर्णी गरस्फुटा ॥ ३५ ॥ मधुपुष्पा सशल्या च कांडिनी पर्वपुष्पिका । श्येनघंटा शूलिनी च रामदूतांति "कैयके' ॥ ३६ ॥ विषभद्रा केशरुहा 'द्रव्यनामनिघंटके' । अष्टविंशतिसंख्येति प्रोक्ता वैद्यविचक्षणैः ॥ ३७ ॥

गुणाः—नागदंती कटुस्तिक्ता रुक्षा वातकफापहा । गुल्मशूलोदरघ्नी च कंठरोगहरा 'नृपे' ॥ ३८ ॥ तृष्णाछर्दिहरा चैव प्रोक्ता 'गणनिघंटके' ।

## ३२ विष्णुक्रांता ।

नामानि—विष्णुक्रांता हरिक्रांता नीलपुष्पाऽपराजिता ॥ ३९ ॥ नीलक्रांता सुनीला च विक्रांता छर्दिका तथा । प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः ॥ ४० ॥ 'द्रव्यरत्नाकरे' चैव वश्या प्रोक्ता मनीषिभिः । तथा 'गणनिघंटे' तु क्षुरिका च प्रकीर्तिता ॥ ४१ ॥ आस्फोटा गिरिकर्णेति 'कोशे' प्रोक्ता भिषग्वरैः । अर्कसुता जया चैव वर्षगंधा विषोदरा ॥ ४२ ॥ असीतका सूक्ष्मपत्रा 'कैयदेवनिघण्टके' ।

गुणाः—विष्णुक्रांता कटुस्तिक्ता कफवातहरा तथा ॥ ४३ ॥ विषहा पाचनी चैव शुभदायी 'नृपे' स्मृता । बुद्धिस्मृतिकरा चैव व्रणक्रिमिकफापहा ॥ ४४ ॥ 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता शास्त्रवेतृभिः ।

## ३३ कुणंजर-लहेसुवा ।

नामानि—कुणंजरः कुणंजी च कुणंजोरण्यवास्तुकः ॥ ४५ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः । सप्तसंख्येति संप्रोक्ता पुरातनचिकित्सकैः ॥ ४६ ।

गुणाः—कुणंजो मधुरो रुच्यो दीपनः पाचनो 'नृपे' । हिमो वृष्यो मेहहरो रक्तपित्तहरो 'द्रवे' ॥ ४७ ॥

## ३४ भूम्यामलकी-भुइआंवला ।

नामानि—ततो भूम्यामली ताली वितुन्ना दृढपादिका । उच्चटा चारटी वृष्या भूधात्री च हिमालया ॥ ४८ ॥ वीराऽजरा विश्वपर्णी तथा हि भयदा मता । विन्दुपत्री विषघ्नी च बहुवीर्या तमालिका ॥ ४९ ॥ वितुन्निकेति संप्रोक्ता 'राजनामनिघंटके' । तामला च जटाताली तमालं च तमालिनी ॥ ५० ॥ वितुन्नं तातमालं च भूधात्री तु तमालकी । झटामला झटा चैव 'कोशे' प्रोक्ता भिषग्वरैः ॥ ५१ ॥ उत्तमा दृढपादी च बहुपुत्रा शिवा तथा । चामलकी दृढा माल्या हिमा सूक्ष्मफला तथा ॥ ५२ ॥ 'कैवदेवनिघण्टे' तु प्रोक्ता वैद्यविशारदैः । 'द्रव्यरत्नाकरे' चैव जटांता च शिखा स्मृता ॥ ५३ ॥ ततो 'मदनपाले' तु संप्रोक्ता चाजटा तथा । तद्वद्बहुफला चैव प्रोक्ता 'भावप्रकाशके' ॥ ५४ ॥ सुलोकिनी विष्णुपर्णी तमालका तमा 'गणे' ।

गुणाः—भूम्यामली कषायाम्ला शिशिरा मूत्ररोगहा ॥ ५५ ॥ हिमा-वातकरा पांडुपित्तरक्तकफापहा । विषकुष्ठश्वासहरा तृषादाहहरा 'नृपे' ॥ ५६ ॥ हिध्माक्षतक्षयहरा प्रोक्ता 'कैयनिघण्टके' ।

## ३५ गोरक्षी-गोरख इमली ।

नामानि—गोरक्षी सर्पदंडी च दीर्घदंडी सुदंडिका ॥ ५७ ॥ चित्रला गन्धबहुला गोपाली पंचपर्णिका । प्रोक्ता 'राजनिघण्टे' तु वसुसंख्या भिषग्जनैः ॥ ५८ ॥

गुणाः—गोरक्षी मधुरा तिक्ता शिशिरा दाहपित्तनुत् । विस्फोटवांत्यतीसारज्वरशोषविनाशिनी ॥ ५९ ॥

## ३६ गोलोमी ।

नामानि—गोलोमी गोधुमो चैव गोजा क्रोष्टुकपुच्छिका । गोसंभवा प्रस्तरणी प्रोक्ता 'राजनिघण्टके' ॥ ६० ॥ षट्संख्या भिषग्भिस्तु संप्रोक्ता नैव संशयः ।

गुणाः—गोलोमी तु कटुस्तिक्ता त्रिदोषघ्नी हिमा 'नृपे' ॥ ६१ ॥ रक्तार्शोहा ग्राहिणी च दीपनी तत्र संस्मृता । अश्मरीमेहहा प्रोक्ता 'द्रव्यनाम्निनिघण्टके' ॥ ६२ ॥

## ३७ दुग्धफेनी-दूधफेनी ।

नामानि—दुग्धफेनी पयःफेनी फेनदुग्धा पयःस्विनी । लूतारिव्रणकेतुश्च गोजापर्णीति 'राजके' ॥ ६३ ॥ षट्संख्या कथिता पूर्वं पुरातनभिषग्वरैः ।

गुणाः—दुग्धफेनी कटुस्तिक्ता कषाया शिशिरा तथा ॥ ६४ ॥ विषव्रणहरा रुच्या 'नृपे' प्रोक्ता रसायनी ।

## ३८ चांगेरी-क्षुद्राम्लिका, अम्बाटी ।

नामानि—क्षुद्राम्ला चैव चांगेरी चुक्राम्ला चुक्रिका तथा ॥ ६५ ॥ लोणाम्ला च चतुःपर्णी लोणी लोणाम्लपत्रिका । अंबष्ठाम्लवती चाम्ला तथा दन्तशठा मता ॥ ६६ ॥ शस्त्रांगा चाम्लपत्रीति प्रोक्ता 'राजनिघण्टके' । तथाम्ललोटिका लोटा 'धन्वनामनिघंटके' ॥ ६७ ॥ अम्लिकाऽम्लष्टका चैव लोटिका लोणिका तथा । सुनीला राजमाता च अम्लाटा चाम्लदोलका ॥ ६८ ॥ 'केयदेवनिघण्टे' तु प्रोक्ता वैद्यविचक्षणैः । अश्मन्तकोऽम्लपत्रा च कुशली शफरी तथा ॥ ६९ ॥ प्रोक्ता 'भावप्रकाशे' च वैद्यविद्याविशारदैः । सुनिषण्णकपत्रश्च चूता 'गणनिघण्टके' ॥ ७० ॥

गुणाः—क्षुद्राम्लिका रसे चाम्ला चोष्णा वन्हिविवर्द्धिनी । रुचिकृद्ग्राहिणी चैव तथार्शःकफहा नृपे' ॥ ७१ ॥ आमवातहरा चैव प्रोक्ता 'धन्वन्तरौ' ध्रुवं । पित्तला ह्यतिसारघ्नी 'केये' कफमरुद्धरा ॥ ७२ ॥ मुखशोधनिका 'द्रव्ये' 'मदे' कुष्टहरा स्मृता ।

## ३९ रक्तपादी-छोटी लजालू ।

नामानि—रक्तपादी शमीपत्रा स्पृक्का खदिरपत्रिका ॥ ७३ ॥ संकोचनी समंगा च नमस्कारी प्रसारिणी । लज्जालुः सप्तपर्णी च खदिरी गण्डमालिका ॥ ७४ ॥ लज्जा च लज्जिका चैव स्पर्शलज्जा च रोहिनी । रक्तमूला ताम्रमूला स्वगुप्तांजलिकारिका ॥ ७५ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रपरायणैः । 'धन्वन्तरौ' गन्धकारी जयकारी प्रकीर्तिता ॥ ७६ ॥ जयारुणा खदिरका गण्डकाली प्ररोधिनी । 'कैयदेवनिघण्टे' तु रुहा च परिकीर्तिता ॥ ७७ ॥ तथा 'मदनपाले' तु लोहिता मोहिनी स्मृता ।

गुणाः—रक्तपादी कटुः शीता पित्तातिसारजित्तथा ॥ ७८ ॥ शोफदाहश्रमश्वासव्रणकुष्ठकफापहा । कुष्ठघ्नी 'राजनाम्नीति' निघंटे परिकीर्तिता ॥ ७९ ॥ कफपित्तहरा चेव योनिरोगविनाशिनी । रक्तपित्तहरा 'प्रोक्ता' 'कैयदेवनिघंटके' ॥ ८० ॥ रक्तदाहविषघ्नी च 'द्रव्यरत्नाकरे' स्मृता । विसर्पलूताभूतघ्नी 'मदे' तु व्रणरोपणी ॥८१॥

## ४० वैपरीत्या, लज्जालुः-बड़ी लाजवन्ती ।

नामानि—लज्जालुर्वैपरीत्या च तथैव तु बृहद्दला । अल्पक्षुपा वेदसंख्या संप्रोक्ता 'राजनामके' ॥ ८२ ॥

गुणाः—बृहल्लज्जालुका चोष्णा कट्वी कफविनाशिनी । आमहा रसनिष्पत्तिर्नानाविज्ञानदा 'नृपे' ॥ ८३ ॥ 'द्रव्यरत्नाकरे' प्रोक्ता व्रणपित्तातिसारजित् । 'मदे' तु श्लेष्मपित्तघ्नी योनिरोगहरा स्मृता ॥ ८४ ॥

## ४१ हंसपादी-पगी, लजालू भेद ।

नामानि—त्रिपदा रक्तपादी च तथैव हंसपादिका । घृतमंडलिका चैव विश्वग्रन्थिस्त्रिपादिका ॥ ८५ ॥ त्रिपादी कीटमारी च हेमपादी मधुस्रवा । कर्णाटी ताम्रपत्री च विक्रान्ता सुवहा तथा ॥ ८६ ॥ ब्रह्मादनी पदाङ्गी च शीताङ्गी सुतपादुका । सञ्चारिणी च पदिका प्रल्हादी कीटपादिका ॥ ८७ ॥ गोधापदी च हंसांघ्रिः धार्तराष्ट्रपदी तथा । हंसपादी च विज्ञेया 'राजनामनिघण्टके' ॥ ८८ ॥

कीटनामा कीटमाता 'कैये' तु हविमण्डला । तथा 'गणनिघण्टे' तु घृत-मण्डा बहुस्रवा ॥ ८६ ॥

गुणाः—हंसपादी कटूष्णा च विषभूतभ्रमापहा । अपस्मारहरा चैव 'नृपे' प्रोक्ता रसायनी ॥ ९० ॥ विजया तु 'धने' प्रोक्ता भिषग्भिः शास्त्रपारगैः । हिमा गुर्वी रोपणी च रक्तदाहातिसारजित् ॥ ९१ ॥ विसर्पलूताभूतघ्नी व्रणहा 'कैयदेवके' ।

## ४२ अश्वकाथरिका-घोडाकाथरा ।

नामानि—काथरा हयपर्यायैः काथरांतैः प्रकीर्तिता ॥ ९२ ॥ वेदसंख्येति संप्रोक्ता 'राजनाम्नि' निघण्टके ।

गुणाः—अश्वकाथरिका तिक्ता वातघ्नी दीपनी 'नृपे' ॥ ९३ ॥

## ४३ श्वेता पुनर्नवा-सफेद गदापूर्णा ।

नामानि—पुनर्नवा विशाखश्च कठिल्लः शशिवाटिका । पृथ्वी च सितवर्षा भूर्दीर्घपत्रः कठिल्लकः ॥ ९४ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः । शिवाटिका वृश्चिकश्च महावर्षाभवस्तथा ॥९५॥ श्वेतमूलस्तु संप्रोक्ता 'धन्वन्तरिनिघण्टके' । क्षुद्रपत्रो वर्ष-केतुः 'कैये' तु रक्तवृन्तकः ॥ ९६ ॥

गुणाः—श्वेता पुनर्नवा तूष्णा तिक्ता कफविनाशिनी । कास-हृद्रोगशूलघ्नी पांडुशोफविनाशिनी ॥ ९७ ॥ वातहा भिषजां नाथैः प्रोक्ता 'राजनिघण्टके' । शोफोदरहरा 'द्रव्ये' प्रोक्ता वैद्यैर्न संशयः ॥ ९८ ॥ मधुरा तु गुरुश्चैव वातशोथहरा तथा । रसायनीति कविभिः प्रोक्ता 'मदनपालके' ॥ ९९ ॥ रूक्षा क्षतहरा प्रोक्ता वैद्यै 'धन्वनिघ-ण्टके'। दीपना वातकफहा हृद्या रुच्यार्शनाशिनी ॥११००॥ व्रणोदर-गरघ्नीति प्रोक्ता 'कैयनिघंटके' ।

## ४४ रक्ता पुनर्नवा–लाल गदापूर्णा ।

नामानि—पुनर्नवा तु रक्ताख्या क्रूरा मंडलपत्रिका ॥ १ ॥ रक्त-कांडा वर्षकेतुर्लोहिता रक्तपत्रिका । वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका ॥ २ ॥ पिकस्वरा विषघ्नी च प्रावृषेण्या च सारिणी । वर्षाभवः शोणपत्रो शोणः सम्मिलितद्रुमः ॥ ३ ॥ पुनर्नवो नवो नव्यः प्रोक्तो 'राजनिघंटके' । कुठिल्लकस्तु संप्रोक्तो 'धन्वन्तरि-

निघंटके' ॥ ४ ॥ पुनर्भू वृश्चिकश्चैव सदामंडलपत्रकः । वर्षाभूः क्षुद्रवर्षाभूः शोफघ्नी जटिला तथा ॥ ५ ॥ सद्यो विशाखः संप्रोक्तो 'कैयदेवनिघंटके' । दीर्घवर्षोद्भवा चैव तथैव दीर्घमंडलः ॥ ६ ॥ प्रोक्ता 'मदनपाले' तु वैद्यविद्याविशारदैः । वैशाखो विकसा चैव प्रोक्ता 'गणनिघंटके' ॥ ७ ॥

गुणाः—रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी । रक्तप्रदरहा पित्तपांडुरोगहरा 'नृपे' ॥ ८ ॥ रक्तपित्तहरा चैव कफहा 'द्रव्यरत्नके' । हिमा पाके कटु लघु संग्राही वातला तथा ॥ ९ ॥ पित्तहृत्कफरक्तघ्नी प्रोक्ता 'कैयनिघंटके' ।

## ४५ नीलपुनर्नवा—नील गदापूर्णा ।

नामानि—नीला पुनर्नवा नीला श्यामा नीलपुनर्नवा ॥ १० ॥ कृष्णाख्या नीलवर्षाभूर्नीलिनी स्वाभिधान्विता ।

गुणाः—नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी ॥ ११ ॥ हृद्रोगपांडुश्वयथुश्वासवातकफापहा ।

## ४६, ४७ श्वेता वसु, रक्ता वसु-सफेद वसु, लाल वसु ।

नामानि—वसुकोथ वसुः शैवो वसश्च शिवमल्लिका ॥ १२ ॥ ततः पाशुपतश्चैव ग्रहसंख्येति 'राजके'

गुणाः—श्वेतरक्तवसुश्चैव कटुस्तिक्तोष्ण एव च ॥ १३ ॥ पाके शीतौ दीपनौ च ह्यजीर्णानिलगुल्महे ततस्तु श्वेतवसुको 'नृपे' प्रोक्तो रसायनः ॥ १४ ॥

## ४८ सर्पिणी ।

नामानि—भुजंगी सर्पिणी चैव कुंडली पन्नगी फणी भोगी 'राजनिघंटे' तु षट् प्रोक्ता भिषजांवरैः ॥ १५ ॥

गुणाः—सर्पिणी तु विषघ्नी च कुचवृद्धिप्रदा । 'नृपे'

## ४९ वृश्चिका-विछुवा, अगिया ।*

नामानि—वृश्चिका नखपर्णी च पिच्छिलाप्यलिपत्रिका ॥ १६ ॥ प्रोक्ता 'राजनिघंटे' तु वेदसंख्या भिषक्जनैः

गुणाः—वृश्चिका पिच्छिलाऽम्ला च ह्यन्त्रवृद्ध्यादिहा 'नृपे' १७

## ५० मत्स्याक्षी† जलपीपली, मछेली, गङ्गतिरियां ।

नामानि—ब्राह्मी वयस्या मत्स्याक्षी मीनाक्षी सोमवल्लरी प्रोक्ता 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः ॥ १८ ॥ बव्ही तु झषनेत्रा च 'द्रव्यरत्नाकरे' स्मृता तथा 'मदनपाले' तु बाल्हिका परिकीर्तिता ॥ १९ ॥

गुणाः—मत्स्याक्षी शिशिरा रुच्या व्रणकफहरा 'नृपे' 'द्रव्यरत्ने' च भेदीति भिषग्भिः परिकीर्तिता ॥ २० ॥ ग्राहिणी वातला चैव पाके तु कटुका स्मृता कफपित्तास्रकुष्ठघ्नी ।'कैयदेवे' स्मृता बुधैः ।

## ५१ गुंडाला-गोंडाल ।

नामानि—गुंडाला तु जलोद्भूता गुच्छवुध्ना जलाश्रया ॥२१॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्श्रेष्ठैर्न संशयः । कुंभिका वारिपर्णीति प्रोक्ता 'भावप्रकाशके' ॥ २२ ॥

गुणाः—गुंडाला कटुतिक्तोष्णा व्रणशोफहरा 'नृपे' । कृमिहा 'द्रव्यरत्ने' तु 'भावे' प्रोक्ता हिमा सरा ॥ २३ ॥ दोषत्रयकरी रुक्षा ज्वरघ्नी रक्तशोषहा ।

## ५२ भूपाटली-भुइपाडर ।

नामानि—भूपाटली च भूकुंभी भूताली रक्तपुष्पिका ॥ २४ ॥

---

*विछुवाका वृक्ष छोटा होता है पत्ते बड़े होते हैं और उनके शरीर पर लगनेसे वहां आग छूटती है । इसके पत्तों पर सफेद रोंवे होते हैं । पत्ते कुछ कालापन लिये होते हैं ।

†जल पीपली नदी तथा जलाशयोंके किनारे होती हैं । पत्ते कटे हुए लम्बे होते हैं । पत्ते खानेमें लसीले होते हैं । इसमें पीपलके समान लम्बी फली लगती है; इसका शाक बनाया जाता है । इसको मछेन्द्रा और पनिसिंगा भी कहते हैं ।

प्रोक्ता 'राजनिघण्टे' तु भिषक्विद्या विशारदैः।

गुणाः—भूपाटली कटूष्णा च पारदे सुप्रयोजिका ॥ २५ ॥ 'नृपे' 'द्रव्ये' तु बला तथा वीर्यविवर्द्धिनी।

## ५३ पांडुफली-पाटली।

नामानि—पांडु पांडुफली चैव धूसरा वृत्तबीजका ॥ २६ ॥ फली भूरिफली चैव पाटली 'राजनामके'।

गुणाः—पांडूफली तु शिशिरा कृच्छ्ररक्तहरा बला॥ २७ ॥ मूत्राघातहरा तृष्णापित्तहा 'राजनामके'।

## ५४ केना।

नामानि—केना तु छुरिका पत्री पर्वमूला त्वचिप्रिया ॥ २८ ॥ प्रोक्ता 'राजनिघंटे' तु भिषक्विद्याविशारदैः। कर्णमोदा तु संप्रोक्ता 'द्रव्यरत्नाकरे' तथा ॥ २९ ॥

गुणः—केना तु मधुरा शीता स्तन्यदा रुचिकृत् 'नृपे'। 'द्रव्ये' वृष्या मेहहरा रक्तपित्तहरा स्मृता ॥ ३० ॥

## ब्रह्मदंडी-उटकटारा।

नामानि—ब्रह्मदंड्यजदंडी च कंटपत्रफला 'नृपे'।

गुणाः—ब्रह्मदंडी कटूष्णा च कफशोफविनाशिनी ॥ ३१ ॥ वातहंत्रीति संप्रोक्ता 'राजनामनिघंटके'।

## ५६ द्रवंती-छोटी मूसाकानी।

नामानि—द्रवंती शंबरी चित्रा न्यग्रोधी शतमूलिका ॥ ३२ ॥ प्रत्यक्श्रेणी वृषा चण्डा पत्रश्रेण्याखुपत्रिका। प्रतिपर्णी मूषिकाह्वा विक्रांता तु शिफा च सा ॥ ३३ ॥ सहस्रमूली संप्रोक्ता 'राजनामनिघंटके'।

गुणाः—द्रवंती मधुरा शीता रसबंधकरी परा ॥ ३४ ॥ ज्वरक्रिमीशूलहरा 'नृपे' प्रोक्ता रसायनी।

## ५७ द्रोणपुष्पी-गोमा।

नामानि—द्रोणपुष्पी दीर्घपत्रा कुम्भयोनि कुतुंबिका ॥ ३५ ॥ चित्रक्षुपः कुतुम्बा च सुपुष्पा चित्रपत्रिका। प्रोक्ता 'राजनिघंटे'

तु वैद्यशास्त्रविशारदैः ॥३६॥ द्रोणा छत्रा कुरम्बा च 'कैयदेवे' स्मृता बुधैः । 'द्रव्यरत्नाकरे' चैव पालिंदी परिकीर्तिता ॥ ३७ ॥ तथा 'मदनपाले' तु प्रोक्तः श्वसनको ध्रुवं ।

गुणाः—द्रोणपुष्पी कटूष्णा च रुच्या वातकफापहा ॥ ३८ ॥ अग्निमांद्यहरा चैव वातज्वरनिवारिणी । 'राजनामनिघंटे' तु संप्रोक्ता भिषजांवरैः ॥ ३९ ॥ पाके स्वादु तु रूक्षा च भेदिनी वातपित्तहा । कफामकामलाशोफनाशिनी 'कैयदेवके' ॥ ४० ॥ गुरु वृष्या कृमिहरा प्रोक्ता 'मदनपालके' । तमकश्वासजित्प्रोक्ता वैद्यै 'र्भावप्रकाशके' ॥ ४१ ॥

## ५८ महाद्रोणा-बड़ा गोमा ।

नामानि—महाद्रोणा कुरम्बा च देवपूर्वक एव च । दिव्यपुष्पी महाद्रोणी देवीकांडा तथैव च ॥ ४२ ॥ देवद्रोणा भिषग्भिस्तु संप्रोक्ता 'राजनामके' । कौंडिन्यस्तु महादेवस्तथा देवकुरम्बकः ॥ ४३ ॥ कुसुम्भकश्च संप्रोक्तो 'कैयदेवनिघण्टके' । वृक्षसारस्तु संप्रोक्तो वैद्यै 'र्मदनपालके' ॥ ४४ ॥

गुणाः—देवकुम्भा कटुस्तिक्ता भेद्या भूतार्तिवातहा । कफाग्निमांद्यहृत्प्रोक्ता 'नृपे' पारदशोधिनी ॥ ४५ ॥

## ५९ झेण्डुक-झेंडू ।*

नामानि—झण्डूः स्यात्सलपुष्पा तु झेंडूको 'राजनामके' ।

गुणाः—झेंडुः कटुः कषायश्च भूतज्वरहरो 'नृपे' ॥४६॥ 'द्रव्यरत्ने' तु मेहघ्नो संप्रोक्तो भिषजांवरैः ।

## ६० गोरक्षदुग्धी-गोरखदुधी ।†

नामानि—गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी ॥ ४७ ॥ बहुपत्रा मृतञ्जीवी मृतसञ्जीवनी 'नृपे' ।

गुणाः—गोरक्षदुग्धी मधुरा वृष्या संग्राहिका हिमा ॥ ४८ ॥

---

* झंडूका वृक्ष लगभग एक पुरुष ऊंचा बढ़ता है । इसपर एकपर एक कलङ्गी लगती है और वह रोवेंसे भरी रहती है ।

† यह अन्धाहूली जातिकी वनस्पति है । इसमेंसे जो दूध निकलता है वह लाल रङ्गका होता है ।

सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा । 'नृपे' 'द्रव्ये' स्तम्भिनी च मेहहा संस्मृता बुधैः ॥ ११४९ ॥ इति श्रीसिद्धेश्वरप्रेरिते राघवविरचिते निघण्टशिरोमणे पर्पटादिक्षुद्रक्षुपवर्गः समाप्तः ॥

# ४ पिप्पल्यादिवर्गः ।

## पिप्पली-पीपली ।

नामानि—पिप्पली कृकरा शौंडी चपला मागधी कणा । कटुबीजा च कोरङ्गी वैदेही तिक्ततण्डुला ॥ १ ॥ श्यामा दन्तफला कृष्णा कोला च मगधोद्भवा । उषणा चोपकुल्याच तथैव तीक्ष्णतण्डुला ॥ २ ॥ प्रोक्ता 'राजनिघण्टे' तु वसुभूसंख्यकेति च ।

गुणाः—पिप्पली ज्वरहा वृष्या स्निग्धोष्णा कटुतिक्तका ॥ ३ ॥ दीपनी वातहा श्वासकासश्लेष्महरा 'नृपे' । वातश्लेष्मक्षयहरा प्रोक्ता 'धन्वन्तरौ' ध्रुवम् ॥ ४ ॥ आर्द्रा गुणे हिमा गुर्वी स्वाद्वी स्निग्धा कफप्रदा । जीर्णज्वरहरा प्रोक्ता वैद्यै 'र्भावप्रकाशके' ॥ ५ ॥

## २ गजपिप्पली-गजपीपर ।

नामानि—गजोषणा चव्यफला चव्यजा गजपिप्पली । श्रेयसी क्षुद्रवैदेही दीर्घग्रंथिश्च तैजसी ॥ ६ ॥ वर्तुली स्थूलवैदेही प्रोक्ता 'राजनिघण्टके' 'धन्वन्तरिनिघण्टे' तु चविका परिकीर्तिता ॥ ७ ॥ वंशिकः सर्वदापुष्पस्तथा मर्कटपिप्पली । करंजो पार्वतेयश्च गजकृष्णा तदुत्तरं ॥ ८ ॥ प्रोक्ता 'गणनिघण्टे' तु भिषक्विद्याविशारदैः । गजाव्हा इभकृष्णाच वशिरो हस्तिपिप्पली ॥ ९ ॥ करिकृष्णा 'कैयदेवे' कपिवल्ली तु 'भावके' । राजकृष्णा कोलवल्ली 'द्रव्यरत्ने' प्रकीर्तिता ॥ १० ॥

गुणाः—गजोषणा कटूष्णा च रूक्षा मलविशोषणी । बलासवातहन्त्री च स्तन्यकर्णविवर्द्धिनी ॥ ११ ॥ 'नृपे' 'कैय' कटुः पाके वीर्योष्णा वातश्लेष्महा । कृमिश्वासातिसारघ्नी दीपनी कण्ठरोगहा ॥ १२ ॥

## शुष्कापिप्पली ।

शुष्का लघुः स्वादुपाका तथैव च रसे कटुः । सरा च कामलाहन्त्री कफगुल्मविनाशिनी ॥ १३ ॥ कुष्ठकण्ठरुजांहंत्री 'मदने'

परिकीर्तिता । मूत्रकृच्छ्राश्मरीहन्त्री तथा विस्फोटनाशिनी ॥१४॥ योनिशूलप्रहन्त्रीति प्रोक्ता वैद्यै 'गणे' ध्रुवम् । 'द्रव्यारत्नाकरे' वैद्यै र्भेदिनी परिकीर्तिता ॥ १५ ॥ वृष्या पाके स्वादुरसा पित्तला च रसायनी । कासोदरप्रहन्त्री च कुष्ठगुल्मार्शनाशिनी ॥ १६ ॥ आमवातप्रमेहघ्नी शूलहा 'मदने' स्मृता ।

## ३ सैंहली पिप्पली-सिंहली पीपर ।

नामानि—सैंहली सर्पदण्डा च सर्पांगी ब्रह्मभूमिजा ॥ १७ ॥ पार्वती शैलजा मूलं लम्बबीजोत्कटाद्रिजा । सिंहलस्था लम्ब-दन्ता जीवाला चैव जीवला ॥ १८ ॥ कुरवी जीवनेत्रा च प्रोक्ता 'राजनिघण्टके' । सिंहली नीलिका नाडी कुरंटी सितवारिका ॥ १९ ॥ 'द्रव्यरत्नाकरे' चैव भिषग्भिः परिकीर्तिता ।

गुणाः—सैंहली कटुरुष्णा च जन्तुघ्नी दीपनी परा ॥ २० ॥ कफश्वासानिलघ्नी च कोष्ठशोधनिका 'नृपे' । 'द्रव्ये' शीतारेचनी च वृष्यामानिलशोधिनी ॥ २१ ॥

## ४ वनपिप्पली—वनपीपर ।

नामानि—सूक्ष्मा क्षुद्रा वनस्था च पिप्पली 'राजनामके' ।

गुणाः—वनस्था पिप्पली रुच्या तीक्ष्णोष्णा दीपनी 'नृपे' ॥ २२ ॥ आर्द्रा भवद्गुणाढ्या तु शुष्का स्वल्पगुणा स्मृता ।

## ५ पिप्पलीमूल—पीपरामूल ।

नामानि—ग्रन्थिकं पिप्पलीमूलं मूलं तु चटका शिरः ॥ २३ ॥ कोलमूलं कटुग्रन्थी कटुमूलं कटूषणं । सर्वग्रन्थिस्तु पत्राढ्य विरूपं शोणसम्भवं ॥ २४ ॥ सुग्रन्थि ग्रन्थिलं चैव संप्रोक्तं 'राज-नामके' । 'धन्वन्तरिनिघंटे' तु संप्रोक्तं चविकाशिरः ॥२५॥ कणा-मूलं मागधं च रूढकं मगधाजटा । षड्ग्रन्थिस्तु सुसंप्रोक्ता 'कैय-देवनिघंटके' ॥ २६ ॥ कृष्णामूलं तथा चांघ्रिग्रन्थिकं 'द्रव्यनामके' । शौंडिकं चपलामूलं संप्रोक्तं 'गणनामके' ॥ २७ ॥

गुणाः—ततस्तु पिप्पलीमूलं कटूष्णं श्लेष्मनाशनं । कृमिहृद्दीपनं चैव वातरोगविनाशनं ॥ २८ ॥ रोचनं पित्तलं चैव 'नृपे' प्रोक्तं

भिषक्जनैः । श्वासकासापहं 'द्रव्ये' 'मदे' चोदररोगजित् ॥ २९ ॥ पाचनं च तथा रूक्षं संप्रोक्तं वैद्यनायकैः । आनाहप्लीहगुल्मघ्नं क्षयघ्नं 'भावनामके' ॥ ३० ॥

## ६ शुण्ठी–सोंठ ।

नामानि—शुंठी महौषधं विश्वं नागरं विश्वभेषजं । विश्वौषधं कटुग्रन्थिः कटुभद्रं कटूषणं ॥ ३१ ॥ सौपर्णं शृङ्गवेरं च कफारिश्चार्द्रकः स्मृतः । शोषणं नागराह्वं च प्रोक्तं 'राजनिघंटके' ॥ ३२ ॥ 'धन्वन्तरिनिघंटे' तु आर्द्रिकं परिकीर्तितं । कटूत्कटं 'कैयदेवे' भिषग्भिः परिकीर्तितं ॥ ३३ ॥ सप्तभूसंख्यका प्रोक्ता भिषक्विद्याविशारदैः ।

गुणाः—शुंठी कटूष्णा स्निग्धा च कफशोषविनाशिनी ॥ ३४ ॥ वायुशूलप्रहन्त्री च बद्धोदरविनाशिनी । श्वासाध्मानश्लीपदघ्नी प्रोक्ता 'राजनिघंटके' ॥ ३५ ॥ आमवातप्रहन्त्री च पाचनी 'मदने' स्मृता । अरुचिघ्नी च वृष्या च वातोदरविनाशिनी ॥ ३६ ॥ कासपांडुहरा प्रोक्ता 'धन्वन्तरिनिघंटके' । पाके तु मधुरं प्रोक्तं मलसंग्राहिकं तथा ॥ ३७ ॥ हृद्यं स्वर्यं वातकफहृद्रोगार्शोविनाशनं । आमघ्नं पित्तलं 'कैये' हिध्मानाहवमेहरा ॥ ३८ ॥

## ७ आर्द्रकं–अदरख ।

नामानि—आर्द्रकं गुल्ममूलं च मूलजं कन्दलं वरं । शृङ्गवेरं महीजं च सैकतेष्टमनूपजं ॥ ३९ ॥ अपाकशाकमार्द्राख्यं राहुछत्रं सुशाककं । आर्द्रशाकं तु शाङ्गं च सच्छाकं 'राजनामके' ॥ ४० ॥ कन्दरं च महाजम्बु 'धन्वन्तरिनिघंटके' । ककुदं 'कैयदेवे' च भिषग्भिः परिकीर्तितं ॥ ४१ ॥ कन्दौषधं 'द्रव्यरत्ने' संप्रोक्तं भिषजांवरैः ।

गुणाः—आर्द्रकं तु कटूष्णं च हृद्यं पाके च शीतलं ॥ ४२ ॥ दीपनं रुचिदं शोफकण्ठामयविनाशनं । कफहं भिषजांनाथैः प्रोक्ता 'राजनिघंटके' ॥ ४३ ॥ 'द्रव्ये' सरं च 'मदने' भेदनं गुरु संस्मृतं ।

## ८ मरिचं–मिर्च ।

नामानि—मरिचं पलितं श्यामं कोलं पल्लीजमूषणं ॥ ४४ ॥

यवनेष्टं वृत्तफलं शाकांगं धर्मपत्तनं । कटुकं च शिरोवृत्तं वीरं कपिविरोचनं ॥ ४५ ॥ मृष्टं सर्वहितं कृष्णं प्रोक्तं 'राजनिघंटके'। 'कैयदेवनिघण्टे' तु तीक्ष्णं च चर्मबन्धनं ॥ ४६ ॥ 'द्रव्यरत्नाकरे' चैव श्यामं तु परिकीर्तितं । तथा 'मदनपाले' तु संप्रोक्तं चटकाशिरः ॥ ४७ ॥ चरप्रियं कृमिहरं धनं 'गणनिघंटके' ।

गुणाः—मरिचं कटुतिक्तोष्णं लघुश्लेष्मानिलघ्नकं ॥ ४८ ॥ कृमिहृद्रोगनिघ्नं च रुचिकृ'द्राजनामके' । पित्तकृत् 'धन्वके' प्रोक्तमार्द्रं तु परिकीर्त्यते ॥ ४९ ॥ आर्द्रं नात्युष्णमित्युक्तं स्वादु पाकेत्वपित्तलं । कफप्रसेकदं चैव गुरु तत्रैव प्रोच्यते ॥ ५० ॥ शुष्कं स्यात्तु रसे पाके चोष्णं हि लघुदीपनं । अवृष्यं श्वासशूलघ्नं शोष्यं तत्रैव कथ्यते ॥ ५१॥ पूयस्रघ्नं च नात्युष्णं 'द्रव्ये' स्यान्नातिपित्तलं।

## ९ श्वेतमरिच–सफेद मिर्च ।

नामानि—सिताख्यं सितमरिचं चन्द्रकं सितवल्लिजं ॥ ५२॥ धवलं च तथा प्रोक्तं बालकं बहुलं 'नृपे' । ततस्तु शुभ्रमरिचं शीग्रोबीजं च शिग्रुकं ॥ ५३ ॥ 'धन्वन्तरिनिघंटे' तु भिषग्भिः परिकीर्तितं ।

गुणाः—संप्रोक्तं श्वेतमरिचं कटूष्णं चोष्णमेव च ॥ ५४॥ विषघ्नं भूतशमनमवृष्यं दृष्टिरोगहृत् । रसायने च संग्राह्यं वैद्यैर्'राजनिघंटके' ॥ ५५ ॥

## १० धान्यक–धनियां ।

नामानि—धान्यकं धानकं धान्यं धानेयं धनिकं धना। कुस्तुम्बरश्चाल्लकं च छत्रधान्यं वितुन्नकं ॥ ५६ ॥ सुगन्धिः शाकयोग्यश्च सूक्ष्मपत्रो जनप्रियः । धान्यबीजं बीजधान्यं वेधकं 'राजनामके' ॥ ५७ ॥ वेषणाग्रा तु धनिका हृद्यगन्धा तु धान्यका। धानी धाना छल्लिधान्यं छत्रा हृद्या च वेषणा ॥ ५८ ॥ 'कैयदेवनिघंटे' तु भिषग्भिः परिकीर्तितं । तथा 'भावप्रकाशे' च कुनटी संस्मृता बुधैः ॥ ५९ ॥

गुणाः—धान्यकं मधुरं शान्तं कषायं पित्तनाशनं । कासतृट्छर्दिकफहं दीपनं ज्वरहं 'नृपे' ॥ ६० ॥ 'द्रव्ये' ज्वरातिसारघ्नं 'मदने' मूत्रलं लघु । रक्तार्शोघ्नं तु 'भावे' ग्राहि प्रोक्तं भिषग्जनैः

॥ ६१ ॥ 'धन्वन्तरौ' तु चक्षुष्यं हृद्यं रोचनमित्यपि । पाके स्वादु तथा वृष्यं मूत्रलं च त्रिदोषहृत् ॥ ६२ ॥ उष्णवीर्यं बद्धविट्कं पाचनं दाहश्वासहृत् । गुदोत्थं शकृमोन्हन्ति 'कैयदेवनिघंटके' ॥६३॥

## ११ यवानी—अजवाइन ।

नामानि—यवानी दीप्यको दीप्यो यवसाह्वो यवाग्रजः । दीपनी चोग्रगन्धा च वातारिर्भूकदंबका ॥ ६४ ॥ यवजो दीपनीयश्च शूलहंत्री यवानिका । उग्रा च तीव्रगन्धा च प्रोक्ता 'राजनिघण्टके' । ॥ ६५ ॥ 'कैयदेवनिघण्टे' तु भूमिकः परिकीर्तितः । 'द्रव्यरत्नाकरे' चैव कारवी कीर्तिता बुधैः ॥ ६६ ॥ ततो 'मदनपाले' च त्वग्निगन्धा प्रकीर्तितः । तथा 'भावप्रकाशे' च ब्रह्मगर्भाऽजमोदिका ॥ ६७ ॥ अग्निवर्द्धो यवानश्च हृद्यो 'गणनिघण्टके' । ब्रह्मदर्भाह्वयश्चैव 'कोशे' तु परिकीर्तितः ॥ ६८ ॥ चतुर्विंशतिसंख्याका संप्रोक्ता भिषजां वरैः ।

गुणाः—यवानी कटुतिक्तोष्णा वातार्शोश्लेष्मशूलहा ॥ ६९ ॥ आध्मानकृमिछर्दिघ्नी दीपनी 'राजनामके' । आमवातहरा चैव स्मेति 'द्रव्यनामके' ॥ ७० ॥ रोचनी पाचनी हृद्या लघ्वी कफविनाशिनी । शुक्रानिलोदरानाहगुल्मघ्नी पित्तकोपना ॥ ७१ ॥ 'कैयदेवनिघण्टे' च संप्रोक्ता भिषजांवरैः । वातश्लेष्महरा गुल्मनाशिनी 'मदने' स्मृता ॥ ७२ ॥ हृद्रोगशमनी प्रोक्ता वैद्यै 'र्गणनिघण्टके' ।

## १२ चव्य—चवक ।

नामानि—चव्यकं चविका चव्यं वजिरो गन्धनाकुली ॥ ७३ ॥ वल्लीकोलं कोलवल्ली तथा कुटिलमस्तकं । तीक्ष्णा करिफणावल्ली कृकरो 'राजनामके' ॥ ७४ ॥ नेत्रभूसंख्यका प्रोक्ता पुरातनचिकित्सकैः ।

गुणाः—चव्यं तु कटुकं चोष्णं रोचनं लघु दीपनं ॥ ७५ ॥ जन्तुहं कासश्वासघ्नं शूलहं 'राजनामके'। कफवातहरं 'धन्वे' 'द्रव्ये' चार्शोहरं स्मृतं ॥ ७६ ॥

## १३ चित्रकः—चीता ।

नामानि—चित्रकोऽग्निश्च शार्दूलश्चित्रपाली कुटः शिखी । कृशानुर्दहनश्चैव व्यालो ज्योतिस्तु पालकः ॥ ७७ ॥ अनलो दारुणो

वन्हिः पावकः शबलस्तथा । पाठी द्वीपी तु चित्रांगः शूरो 'राजनिघण्टके' ॥ ७८ ॥ 'धन्वन्तरिनिघण्टे' तु पाठीनो वल्लरी हविः । हुताशनोरुणश्चैव ज्योतिष्को हुतभुक् तथा ॥ ७९ ॥ ज्वलनश्च शठश्चैव प्रोक्तो 'केयनिघण्टके' । ज्वालस्तु दीपसंज्ञा च त्वमलो 'गणनामके' ॥ ८० ॥

गुणाः—चित्रकोग्निसमः पाके कटुः शोफकफापहा । वातोदारार्शोग्रहणीकृमिकण्डूहरो 'नृपे' ॥ ८१ ॥ कासहृत् 'मदने' प्रोक्तो पुरातनचिकित्सकैः । वीर्योष्णो दीपनो रुक्षो रोचनश्चामशोफहा ॥८२॥ कुष्ठहा 'केयदेवे' च कटुत्वात्कफनाशनः । उष्णत्वाद्वातनाशश्च त्रिदोषघ्नोऽग्निदीपनः ॥ ८३ ॥ प्रोक्तः पुरातनैर्वैद्यैस्तिक्तत्वात् पित्तनाशनः ।

## १४ रक्तचित्रक-लालचीता ।

नामानि—कालो व्यालः कालमूलो मार्जारस्त्वतिदीप्यकः ॥ ८४ ॥ दाहकोग्निः पावकश्च चित्रांगो रक्तचित्रकः । महांगः स्याद्रुद्रसंख्या 'राजनामनिघण्टके' ॥ ८५ ॥

गुणाः—स्थूलकायकरो रुच्यः कुष्ठघ्नो रक्तचित्रकः । रसे नियामको लोहे वेधकश्च रसायनः ॥ ८६ ॥ प्रोक्तो 'राजनिघण्टे' तु पुरातनभिषग्वरैः ।

## १५ विडंगः -वायविडंग ।

नामानि—विडंगा कृमिहा चैव तण्डुला तण्डुलीयका ॥ ८७ ॥ वातारि तण्डुला चैव जन्तुघ्नी मृगगामिनी । कैरली गव्हराऽमोघा कपाली चित्रतण्डुला ॥ ८८ ॥ वरा सुचित्रवीजा च जन्तुहंत्रीति 'राजके' । मोघा तु कैरलं चैव तथैव भृंगगामिनी ॥ ८९ ॥ 'धन्वन्तरिनिघण्टे' तु कथिता वैद्यपंडितैः । कृमिजित् कृमिहंत्री च वेक्लृ कृमिहरं तथा ॥९०॥ भूतघ्नं कृमिहच्चैव 'केयदेवनिघण्टके' । 'द्रव्यरत्नाकरे' चैव जन्तुघ्नं कृष्णतण्डुलम् ॥ ९१ ॥ तथा 'मदनपाले' तु कैराला तण्डुलाधिका । क्षुद्रतण्डुलसंज्ञा च तथैव जन्तुहारणं ॥९२॥ तथा 'गणनिघण्टे' तु कृमिशत्रुः प्रकीर्तितः ।

गुणाः—विडंगस्तु कटूष्णश्च लघुर्वातकफार्तिनुत् ॥ ९३ ॥ अग्निमांद्यारुचिहरो भ्रांतिक्रिमिविनाशनः । 'द्रव्ये' गुल्महरः प्रोक्तो

'कैये' विष्टंभहा तथा ॥ ९४ ॥ गणेनाहहरः प्रोक्तो भिषक्श्रेष्ठैर्न संशयः । पाके कटुस्तु रुक्षश्च वीर्योष्णोध्माननाशकः । आमशूलहरप्रोक्तो 'कैये' विष्टंभहातथा । मेहोदरविनाशश्च मेदप्रोक्तो भिषक्जनैः ॥ ९५ ॥

## १६ वचा-घोड़वच ।

नामानि—उग्रगन्धा वचा चैव गोलोमी जटिला तथा । उग्रा लोमशा भद्रा मंगल्या विजया तथा ॥ ९६ ॥ रक्षोघ्नेति भिषग्भिस्तु संप्रोक्ता 'राजनामके' 'कैयदेवनिघण्टे' तु षट्ग्रन्था परिकीर्तिता ॥ ९७ ॥

गुणाः—वचा तीक्ष्णा कटूष्णा च कफामग्रंथिशोफनुत् । वातज्वरातिसारघ्नी वांतिकृत् भूतनाशिनी ॥ ९८ ॥ तथोन्मादहरा प्रोक्ता 'राजनामनिघण्टके' ।

## १७ श्वेतवचा-दुधियावच ।

नामानि—मेध्या श्वेतवचा चैव षड्ग्रंथादीर्घपत्रिका ॥ ९९ ॥ तीक्ष्णगन्धा हैमवती मंगल्या विजया तथा । प्रोक्ता 'राजनिघंटे' तु पुरातनचिकित्सकैः ॥ १०० ॥ श्वेता तु शतपर्वा च वीरयुक्ताऽरुणाऽपरा । शुभा भोगवती लोना कर्षणी 'कैयदेवके' ॥ १ ॥ पारसीका बचा शुक्ला प्रोक्ता 'भावप्रकाशके' । अग्रसंज्ञस्तु रक्षोघ्नी प्रोक्ता 'गणनिघंटके' ॥ २ ॥ एकविंशतिसंख्याका भिषग्भिः परिकीर्तिता ।

गुणाः—श्वेतवचाति गुणाढ्या मतिमेधायुःसमृद्धिका कफनुत् ॥ ३ ॥ वृष्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा । शकृत्विशोधिनी प्रोक्ता 'भावे' मूत्रविशोधनी ॥ ४ ॥ वातश्लेष्म हरं कंठ्यं मेध्यं कृमिविबंधहृत् । शूलाध्मानहरं प्रोक्तं 'धन्वन्तरिनिघण्टके' ॥ ५ ॥ कटु पाके दीपनी च जीवनी स्वरदा ध्रुवं । रक्षोपस्मारजन्तुघ्नी 'कैयदेवे' स्मृता ध्रुवं ॥ ६ ॥

## १८ कुलंजन-कुलिंजन ।

नामानि—कुलंजो गंधमूलश्च तीक्ष्णमूलः कुलंजनः । प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ७ ॥ 'द्रव्यरत्नाकरे' चैव

गंधबीजः प्रकीर्तितः । उग्रगंधा सुगंधा च महाभरवचा तथा ॥८॥ प्रोक्ता 'भावप्रकाशे' च वसुसंख्या भिषग्वरैः ।

गुणाः—कुलंजः कटुतिक्तोष्णो दीपनो मुखदोषनुत् ॥ ९ ॥ 'नृपे' 'द्रव्यनिघंटे' च कफवातहरः स्मृतः । सुस्वरत्वकरी रुच्या हृत्कंठमुखशोधिनी ॥ १० ॥ 'भावप्रकाशे' संप्रोक्ता पुरातनभिषग्जनैः ।

## १९ जीरक-जीरा ।

नामानि—जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः ॥ ११ ॥ अजाजिको वन्हिसखो मागधो 'राजनाके' । दीर्घजं चैव हृद्यं च मनोज्ञं वरुणं तथा ॥ १२ ॥ पूज्यक्षानं तु पीताभं रुच्यं 'धन्वन्तरौ' स्मृतं । रसभूसंख्यका प्रोक्ता पुरातनचिकित्सकैः ॥ १३ ॥

गुणाः—जीरकः कटुरुष्णश्च वातहृद्दीपनः परः । गुल्माध्मानातिसारघ्नो ग्रहणीकृमिहृ 'न्नृपे' ॥१४॥ क्षयहा 'द्रव्यरत्ने' च 'मदने' तु बलासहा । रूक्षो रुच्यश्च संग्राही चक्षुष्यः पित्तलस्तथा ॥ १५ ॥ गर्भाशयविशोधश्च मेध्यो हृद्यश्च पाचनः । छर्दिवातकफघ्नश्च प्रोक्तो 'कैयनिघंटके' ॥१६॥ बल्यो वृष्यः कफघ्नश्च ज्वरघ्नो 'भावनामके' ।

## २० श्वेतजीरक-सफेद जीरा ।

नामानि—गौरादिजीरका जाजी श्वेतजीरक एव च ॥ १७ ॥ कणाव्हा कणजीर्णा च कणा दीप्यः सितादिकः । सिताजाजी दीर्घकणा प्रोक्ता 'राजनिघंटके' ॥ १८ ॥ शुक्लाजाजी दीर्घकस्यात्तथा च कणजीरकः । दीर्घजीरस्तथा प्रोक्तो 'धन्वन्तरिनिघंटके ॥ १९ ॥

गुणाः—गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी । कृमिघ्नी विषहंत्री च चक्षुष्याध्माननाशिनी ॥ २० ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याशारदैः ।

## २१ कृष्णजीरक-स्याह जीरा ।

नामानि—कृष्णा तु जरणा काली बहुगंधा च भेदिनी ॥ २१ ॥ पटुभेदनिका रुच्या नीला नीलकणा तथा । काश्मीरजीरका वर्षकाली स्याद्वान्तिशोधिनी ॥ २२ ॥ कालमेषी सुगंधा च प्रोक्ता 'राजनिघंटके' । कणजीरः सुजरणा तथा च कालपेशिका ॥ २३ ॥

तथा वर्षा तु संप्रोक्ता 'धन्वन्तरिनिघंटके'। कृष्णाजाजी तु हृद्यं च काकजीरकमेव च ॥ २४ ॥ उद्गारशोधनं चैव कृष्णजीरकनाम च। 'कैयदेवनिघंटे' तु प्रोक्ता वैद्यविशारदैः ॥ २५ ॥

गुणाः—जरणा कटुरुष्णा च कफशोफनिकृंतनी। रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्राहिणी 'नृपे' ॥ २६ ॥ मूर्ध्नि रोगहरा प्रोक्ता वैद्यै 'र्द्रव्यनिघंटके'। रक्तपित्तहरा चैव गर्भाशयविशोधिनी ॥२७॥ कफपित्तहरा वृष्या शूलघ्नी 'गणनामके'।

## २२ कुंचिका-कलौंजी।

नामानि—उपकुंचिका तु दीप्यश्च काली पृथ्वी पृथुस्तथा ॥ २८ ॥ तथा स्थूलकणा चैव मनोज्ञा तदनन्तरं। जरणी तरुणा जीर्णा स्थूलजीरक एवच ॥ २९ ॥ कारवी सुषवी चैव पृथ्वीका 'राजनामके'। कालिका सुविषा कुंची करकृष्णा तु वाष्पिका ॥ ३० ॥ 'कैयदेवनिघंटे' च प्रोक्ता वैद्यविशारदैः।

गुणाः—पृथ्वीका कटुतिक्तोष्णा वातगुल्मामदोषनुत् ॥ ३१ ॥ श्लेष्माध्मानहरा जीर्णा जन्तुघ्नी दीपनी 'नृपे'।

## २३ अरण्यजीरक-वनजीरा, कडूजीरा।

नामानि—बृहत्पाली सूक्ष्मपत्रारण्यजीरःकणा तथा ॥ ३२ ॥ वनजीरकसंज्ञश्च संप्रोक्ता 'राजनामके'। धन्वन्तरिनिघंटे' तु वन्यजीरक एव च ॥ ३३ ॥

गुणाः—वनजीरः कटुः शीतो व्रणहा 'राजनामके'। 'द्रव्यरत्नाकरे' प्रोक्तो स्तंभी वातकफापहा ॥ ३४ ॥

## २४ मेथिका-मेथी।

नामानि—मेथिका मेथिनी मेथी दीपनी बहुपत्रिका। बोधिनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥ ३५ ॥ वल्लरी चन्द्रिका मन्था मिश्रपुष्पा च कैरवी। कुंचिका बहुपर्णी च पीतबीजेति 'राजके' ॥ ३६ ॥

गुणाः—मेथी तु कटुका प्रोक्ता रक्तपित्तप्रकोपिनी। कफारुचिप्रहन्त्री च दीपनी वातहृत् 'नृपे' ॥३७॥ दाहच्छर्दिश्लेष्मकासवातरक्तहरा 'द्रवे'। वातश्लेष्मज्वरघ्नीति प्रोक्ता 'मदनपालके' ॥३८॥

## २५ हिंगुपत्री-वाफली ।

नामानि—पृथ्वीका हिंगुपत्री च कवरी दीर्घिका पृथुः । दारुपत्री तु बिल्वीच वाष्पी तन्वीति 'राजके' ॥ ३९ ॥ 'धन्वन्तरिनिघंटे' तु पृथुला वाष्पिका स्मृता । 'कैयदेवनिघंटे' तु तन्द्री च दीर्घपत्रिका ॥ ४० ॥ 'मदने' कारवी तन्त्री बिल्वीका चारुपत्रिका ॥ ४१ ॥

गुणाः—हिंगुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातहृत् ॥ ४२ ॥ आमकृमिहरा रुच्या दीपनी पाचनी 'नृपे' । वातगुल्महरा प्रोक्ता 'मदने' वैद्यनायकैः ॥४३॥ प्लीहबन्धार्शगुल्मघ्नो हृद्बस्तिशूलहृत् 'धने'। 'मदे' श्लेष्महरा 'कैये' 'द्रव्ये' प्लीलाहरा स्मृता ॥ ४४ ॥

## २६ हिंगु–हींग ।

नामानि—उग्रगन्धस्तु हिंगुश्च भूतारिर्बाल्हिकं तथा । उग्रवीर्यं च सूपांगं रक्षोघ्नं जन्तुनाशनं ॥ ४५ ॥ अगूढगन्धं जरणं मेदनं रामठं तथा । दीप्तं सहस्रवेधं च सूपधूपनमेव च ॥ ४६ ॥प्रोक्तं 'राजनिघंटे' तु पुरातनभिषग्वरैः । तथात्युग्रं च जन्तुघ्नं शूलनाशनमेव च ॥ ४७ ॥ 'धन्वन्तरिनिघंटे' च जरकं 'कैयदेवके' । नवभूसंख्यका प्रोक्ता भिषक्विद्याविशारदैः ॥ ४८ ॥

गुणाः—हिंगु हृद्यं कटूष्णं च कृमिवातकफापहं । विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्महृत् 'नृपे' ॥ ४९ ॥ सरं हृद्रोगहृत्प्रोक्तं 'धन्वन्तरिनिघंटके' । रक्तपित्तकरं श्वासकासोदरविनाशनं ॥५०॥ आनाहाजीर्णहृच्चैव प्रोक्तं 'कैयनिघंटके' । पित्तवर्धनमित्येतत् 'मदने' परिकीर्तितं ॥ ५१ ॥

## २७ नाडीहिंगु–डिकेमाली ।

नामानि—नाडीहिंगु पलाशाख्या जन्तुका रामठी तथा । वंशपत्री च पिण्डाव्हा सुवीर्या हिंगुनाडिका ॥ ५२ ॥ प्रोक्तं 'राजनिघंटे' तु पुरातनचिकित्सकैः । वेणुपत्री वंशदला पिंगा हिंगु शिवाटिका ॥ ५३ ॥ 'धन्वन्तरिनिघंटे' च प्रोच्यते भिषजांवरैः । नाडी हिंगुफला चैव प्रोक्ता 'मदनपालके' ॥ ५४ ॥

गणाः—नाडीहिंगु कटूष्णं च कफवातविबन्धहृत् । विष्टंभ-

नाशनं प्रोक्तं 'राजनामनिघंटके' ॥१५५॥ आमहृद्दीपनं प्रोक्तं 'धन्वनामनिघंटके' । गुल्मप्लीहविषघ्नं च 'द्रव्यरत्नाकरे' स्मृतं ॥ १५६ ॥

## २८ अग्निजार* ।

नामानि—अग्निजारोऽग्निनिर्यासोप्यग्निगर्भोऽग्निजः स्मृतः ॥ ५७॥ वडवाग्निमलो ज्ञेयो जरायुश्चाग्निसम्भवः । प्रोक्तो 'राजनिघण्टे' तु भिषक्विद्याविशारदैः ॥ ५८ ॥ 'धन्वन्तरिनिघण्टे' तु चाग्निगर्भोऽग्निसम्भवः ।

गुणाः—अग्निजारस्तूष्णवीर्यः कटुश्चोदरनाशनः ॥ ५६ ॥ वातोद्भवकफघ्नश्च सन्निपातहरस्तथा । पित्तप्रदो भिषक्श्रेष्ठैः प्रोक्तो 'राजनिघंटके' ॥ ६० ॥ हृद्रोगकफशीतघ्नो 'धन्वे' प्रोक्तो भिषग्जनैः ।

## २९ रास्ना-रासना† ।

नामानि—रास्ना युक्तरसा रस्या श्रेयसी रसना रसा ॥ ६१ ॥ सुगन्धिमूला सुरसा रसाढ्यातिरसा तथा । 'राजनामनिघंटे' तु संप्रोक्ता भिषजांवरैः ॥ ६२ ॥ एकपर्णी च सुवहा सुगन्धा गन्धनाकुली । सुगन्धा सुरभी चैव 'कैयदेवे' प्रकीर्तिता ॥ ६३ ॥ तथा 'मदनपाले' तु गन्धमूला प्रकीर्तिता । रसनीत्वतिसारस्या 'गणनामनिघंटके' ॥ ६४ ॥ एलापर्णी तु 'कोषे' च संप्रोक्ता भिषजांवरैः ।

गुणाः—रास्ना गुरुश्च तिक्तोष्णा वातरक्तविषापहा ॥ ६५ ॥ कासशोफश्लेष्महृच्च पाचनी 'राजनामके' । वातोदरामहन्त्रीति प्रोक्ता 'धन्वन्तरौ ध्रुवं ॥ ६६ ॥ श्वासकासविषघ्नी च ज्वरहिध्माविनाशिनी । शीतामवातहन्त्री च वातशूलविनाशिनी ॥ ६७ ॥

## ३० स्थूलैला-बड़ी इलायची ।

नामानि—बृहदैला तु स्थूलैला 'त्रिपुटा' त्रिदिवोद्भवा । महैला सुरभित्वक् च पृथ्वी कन्या कुमारिका ॥ ६८ ॥ कायस्थैन्द्री गोपुटाच घृताची गर्भसम्भवा । क्रान्तेन्द्राणी दिव्यगन्धा भद्रैला 'राज-

---

*पश्चिमी समुद्र किनारे प्रसिद्ध है ।

†रासना तीन प्रकारका है १ मूलरासना २ पत्र रासना ३ तृण रासना । इनमें मूल रासना श्रेष्ठ है । अपने इधर अरहरिया रासना और अलसिया रासना कह कर इसके दो भेद विशेष प्रसिद्ध हैं । दोनों ही काममें आते हैं ।

नामके' ॥ ६९ ॥ त्रिदिवा त्रिदिवोद्भूता पृथ्वीका त्वक्सुगन्धिका । 'धन्वन्तरिनिघंटे' तु प्रोक्ता वैद्यविचक्षणैः ॥ ७० ॥ 'कैयदेवे' तु पत्रैला कन्यका चन्द्रला पुटा । निष्कुटी चन्द्रवालैला बहुला 'त्वमरे' स्मृता ॥ ७१ ॥

## ३१ एला-छोटी इलायची ।

नामानि—एला बहुगन्धैन्द्री द्राविडी निष्कुटिस्त्रुटी । कपोतवर्णी गौराङ्गी बाला बलवती हिमा ॥ ७२ ॥ उपकुंची चन्द्रिका च सूक्ष्मा सागरगामिनी । गर्भारिर्गन्धफलिका कायस्था 'राजनामके' ॥ ७३ ॥ सूक्ष्मैला बहुला चन्द्रा कौरङ्गी तुत्थनामका । 'धन्वन्तरिनिघंटे' तु प्रोक्ता वैद्यविचक्षणैः ॥७४॥ निस्त्रुटी तु द्विषा चैव क्षुद्रैला चन्द्रसम्भवा । तथा चन्द्रलता प्रोक्ता 'कैयदेवनिघंटके' ॥ ७५ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता द्राविडोद्भवा । चन्द्रवाला निष्कुटी च कोरङ्गी 'मदने' स्मृता ॥ ७६ ॥ तुत्था 'भावप्रकाशे' च भिषग्भिः कथिता ध्रुवं । त्रिपुटी चन्द्रभागा च प्रोक्ता 'गणनिघण्टके' ॥ ७७ ॥ त्रिपुटाऽ'मरकोशे' तु वैद्यविद्याविशारदैः ।

गुणाः—एलाद्वयं शीतलं च तिक्तं पित्तकफापहं ॥ ७८ ॥ हृद्रोगमलपीडाघ्नं पुंस्त्वघ्नं 'राजनामके' अश्मरीनाशिनी प्रोक्ता 'द्रव्यरत्नाकरे' ध्रुवम् ॥ ७९ ॥ बस्तिप्रणाशिनी प्रोक्ता वैद्यैर्मदनपालके' । पित्तप्रकोपनी चैव 'गणे' गर्भविनाशिनी ॥ ८० ॥ कफवातविषापघ्नी व्रणबस्तिरुजांहरा । मुखकण्ठविशोधी च तथा मस्तकशोधनी ॥ ८१ ॥ 'धन्वन्तरिनिघंटे' च संप्रोक्ता भिषजांवरैः । मूत्रकृच्छ्रार्शहन्त्री च श्वासकासकफापहा ॥ ८२ ॥ पित्ताग्निकृद्रोचना च कफपित्तविनाशिनी । रूक्षा हृल्लासतृट्कंडूनाशिनी वामनी 'कये' ॥ ८३ ॥

## ३२ अजमोदा ।

नामानि—अजमोदा खराह्वा च बस्तमोदा च मर्कटी । मोदा गन्धदला हस्ती कारवी गन्धपत्रिका ॥ ८४ ॥ मायूरी शिखिमोदा च मोदाढ्या वन्हिदीपिका । ब्रह्मकोशी विशाली च हृद्यागन्धोग्रगन्धिका ॥ ८५ ॥ मोदिनी फलमुख्या च प्रोक्ता 'राजनिघण्टके' । मयूरका दीप्यका च वल्लिस्तु लोमकर्कटी ॥ ८६ ॥ 'धन्वन्तरिनि-

घंटे' च प्रोक्तं वैद्यविचक्षणैः। रोमकर्कटसंज्ञश्च यवानः कृमिरोगजित्॥ ८७॥ 'कैयदेवनिघंटे' तु संप्रोक्तं भिषजांवरैः। दीप्यवल्ली मर्कटा च 'द्रव्यरत्नाकरे' स्मृता॥ ८८॥ उग्रगन्धा कराव्हा च कर्कटा 'मदने' तथा। 'भावे' ब्रह्मकुशा चैव खराश्वा लोचमस्तकः॥ ८९॥ यवानिका हृद्यगन्धा मेध्यदा 'गणनामके'।

गुणाः—अजमोदा कटूष्णा च कफवातहरा तथा॥ ९०॥ शूलाध्मानारुचिघ्नी च रुचिकृज्जठरापहा। प्रोक्ता 'राजनिघंटे' तु 'मदे' बस्तिरुजांहरा॥ ९१॥ 'धन्वे' हिक्काकृमिघ्नी च तिक्ता तु वन्हिदीपनी। पाके तु कटुका रूक्षा बद्धविट्छर्दिनाशिनी॥ ९२॥ हृद्या वृष्याक्षिरोगघ्नी प्रोक्ता 'कैयनिघंटके'।

## ३३ रेणुका।

नामानि—रेणुका कपिला कान्ता नन्दिनी महिला द्विजा॥९३॥ राजपुत्री हिमा रेणुः पांडुपुत्री हरेणुका। सुपर्णी शिशिरा शान्ता कौंती वृत्ता च धर्मिणी॥ ९४॥ कपिलोला हैमवती पांडुपत्नीति 'राजके'। भस्मगन्धा तथा 'भावे' 'त्वमरे भस्मगन्धिनी॥ ९५॥ वृहद्घटी तथा प्रोक्ता 'गणनामनिघंटके'।

गुणाः—रेणुका च कटुः शीता खर्जुकण्डुतृषापहा॥ ९६॥ मुखवैमल्यकारी च विषदाहहरा 'नृपे'। पाके तु कटुका मेध्या पाचनी गर्भपातनी॥ ९७॥ बलासवातहृत् 'कैये' संप्रोक्ता भिषजांवरैः। 'द्रव्ये' तु पित्तला प्रोक्ता 'गणे' कफविनाशनी॥ ९८॥

## ३४ बोलं—बोल।

नामानि—बोलं रक्तापहं मुंडं सुरसं पिंडकं विषं। मिलोंहं बर्बरं पिंडं सौरभं रक्तगन्धकं॥ ९९॥ रसगन्धं महागन्धं विश्वं च शुभगन्धकं। विश्वगन्धं गन्धरसं व्रणारि नृपनामके'॥ २००॥ गोपकं नालिकं पौरं रसं 'धन्वनिघंटके'। जातीरसं गोमतं च चंचलं रसगन्धकं॥ १॥ पिंडस्तोकं कालकूटं स्तोमकं चात्मगन्धकं। प्राणपिंडो गोपरसः प्राणसंज्ञश्च 'भावके'॥ २॥

गुणाः—बोलं कटूष्णं तिक्तं च कषायं रक्तदोषहृत्। कफपित्तहरं प्रोक्तं प्रदरघ्नं तु 'राजके'॥ ३॥ प्रमेहनाशनं भेदि 'द्रव्ये' वातकफापहं। 'गणे' तु भिषजांनाथैः संप्रोक्तं पुंस्त्वनाशनं॥ ४॥

'कैये' मेध्यं त्रिदोषघ्नं गर्भाशयविशोधनं । कुष्ठापस्माररक्तघ्नं ग्रहज्वरहरं तथा ॥ ५ ॥ 'मदे' तु दीपनं शीतं पाचनं स्मृतमित्यपि ।

## ३५ कर्चूरः—कचूर ।

नामानि—कर्चूरो द्राविडः कार्शो दुर्लभो गन्धमूलकः ॥ ६ ॥ वेधमुख्यो गन्धसारो जटिलो 'राजनामके' । कर्चोरः स्थूलकन्दश्च सटी गन्धस्तु 'द्रव्यके' ॥ ७ ॥ तथा 'मदनपाले' तु शटी प्रोक्ता भिषग्वरैः । तथा 'त्वमरकोशे' तु काल्पको वेधमुख्यकः ॥ ८ ॥ तथा च दुर्लभः प्रोक्तो 'गणनामनिघण्टके' ।

गुणाः—कर्चूरः कटुतिक्तोष्णः कफकासविनाशनः ॥ ९ ॥ मुखवैशद्यजननो गलगण्डादिहा 'नृपे' । त्रिदोषमुखरोगघ्नो ज्वरहा 'द्रव्यनामके' ॥ १० ॥ लघुः श्वासहरः प्रोक्तो वैद्यै'र्भावप्रकाशके' । रुच्यो वातबलासघ्नो दीपनः प्लीहगुल्महा ॥ ११ ॥ अर्शःक्लेशहरः प्रोक्तो 'धन्वनामनिघण्टके' । 'मदे' च कुष्ठव्रणहा वातगुल्महरस्तथा ॥ १२ ॥ कफक्रिमिहरः प्रोक्तो 'गणनामनिघण्टके' ।

## ३६ पाठा-पाढ़ी ।

नामानि—पाठाम्बष्ठाऽम्बष्टिका च प्राचीना पापचेलिका ॥ १३ ॥ पाठिका स्थापनी चैव श्रेयसी वृद्धकर्णिका । एकष्ठीला कुचैली च दीपनी वरतिक्तका ॥ १४ ॥ तिक्तपुष्पा बृहत्तिक्ता दीपनी त्रिशिरा वृकी । वृत्तपर्णी वरा देवी मालवी 'राजनामके' ॥ १५ ॥ त्रिवृच्चैव शुभा प्रोक्ता 'धन्वन्तरिनिघण्टके' । वृकदन्ती रसा यूथा एकैशी विद्धकर्णिका ॥ १६ ॥ तथा च तपनी चैव प्रोक्ता 'कैयनिघण्टके' । तथा 'गणनिघण्टे' तु प्रोक्तातीसारनाशनी ॥ १७ ॥

गुणाः—पाठा तिक्ता कुरूष्णा च वातपित्तज्वरापहा । पित्तदाहातिसारघ्नी भग्नसंधानकृत् 'नृपे' ॥ १८ ॥ 'द्रव्ये' जीर्णहरा प्रोक्ता 'मदे' गुल्मोदरघ्निका । 'भावे' तु गरहा प्रोक्ता शूलघ्नी 'धन्वनामके' ॥ १९ ॥ कुष्ठच्छर्दिगुल्मकण्डुविषहृद्रोगनाशिनी । व्रणशूलश्वासहन्त्री क्रमिघ्ना ग्राहि वातला ॥ २० ॥ पित्तहृत् कफरक्तघ्नी प्रोक्ता 'कैयनिघण्टके' ।

## ३७ वृक्षाम्लं-कोकम ।

नामानि—वृक्षाम्लमम्लशाकस्याच्चुकाम्लं तिन्तिडीफलं । शा-

काम्लमम्लपूरं च पूराम्लं रक्तपूरकं ॥ २१ ॥ चूडाम्लं चैव बीजाम्लं कफाम्लकमतः परं । रसाम्लं वृक्षाम्लफलं श्रेष्ठाम्लं तदनन्तरं ॥ २२ ॥ अत्यम्लमम्लबीजं च फलचुक्रं च 'राजके' । तित्तिडीकं चाम्लवृक्षस्तथा चाम्लमहीरुहः ॥ ३२ ॥ 'धन्वन्तरिनिघंटे' तु प्रोक्तं वैद्यविचक्षणैः । अम्लपादपसंज्ञश्च 'द्रव्यरत्नाकरे' स्मृता ॥ २४ ॥ प्रोक्तं 'गणनिघंटे' तु रक्तपूरकनामकं ॥ २५ ॥

गुणाः—वृक्षाम्लमम्लं कटुकं कषायं सोष्णं कफार्शोघ्नमुदीरयन्ति । तृष्णासमीरोदरहृद्गदादिगुल्मातिसारव्रणनाशिनी 'नृपे' ॥२६॥ शूलजन्तुहरं प्रोक्तं वैद्यैः 'भावप्रकाशके' । संग्राहि लघु वातघ्नं कफघ्नं 'कैयदेवके' ॥२७॥ कासमेहहरं चैव 'द्रव्यरत्ने' स्मृतं बुधैः ।

## ३८ आम्लवेतस-अमलवेत ।

नामानि—अम्लोऽम्लवेतसो वेधी रसाम्लो वीरवेतसः ॥ २८ ॥ वेतसाम्लश्चाम्लसारः शतवेधी तु वेधकः । भीमश्च भेदनो भेदी राजाम्लश्चाम्लभेदनः ॥ २९ ॥ अम्लांकुशो रक्तसारः फलाम्लश्चाम्लनामकः । सहस्रवेधी वीराम्लो गुल्मकेतुर्धराभिधः ॥ ३० ॥ शङ्खद्रावी मांसद्रावी प्रोक्तो 'राजनिघण्टके' । रक्तस्रावी तथा 'धन्वे' 'भावे' तु चुक्रवेतसः ॥ ३१ ॥ चुक्रको चुक्रकेतुश्च शतवेधी सहस्रजित् । मांसारिर्भेदकश्चैव द्रावी तु 'कैयदेवके' ॥ ३२ ॥ चुक्रवेतससंज्ञश्च 'मदने' शतभेदकः ।

गुणाः—अम्लवेतसमत्यम्लं कषायं चोष्णमेव च ॥३३॥ कफार्शवातगुल्मघ्नमरोचकहरं 'नृपे' । कफदूषणमित्येतन्'मदने' परिकीर्तितं ॥ ३४ ॥ प्लीहोदावर्तहिक्काघ्नी ह्यजीर्णकफवातहृत् । छागमांसद्रवः प्रोक्तो वैद्यैः 'भावप्रकाशके' ॥ ३५ ॥ तिक्तं स्निग्धं दीपनं च ह्यामघ्नं 'धन्वनामके' । भेदनं लेखनं हृद्यं लघुकृत् कफनाशनं ॥३६॥ रक्तपित्तहरं चाक्ष्यं विड्भेदाध्मानहिध्महृत् । आनाहाध्मानशूलघ्नं वातश्वासकफापहं ॥३७॥ वमिहृत् 'कैयदेवे' च संप्रोक्ता भिषजां वरैः ।

## ३९ कटुका-कुटकी ।

नामानि—कटुका जननी तिक्ता रोहिणी कटुरोहिणी ॥ ३८ ॥ चक्रांगी मत्स्यपित्ता च घहुला शकुलादनी । शतपर्वा मत्सभेदी कृष्णभेदा महौषधी ॥ ३९ ॥ अशोकरोहिणी कृष्णा कटुः कांडरुहा

तथा । कट्व्यञ्जनी त्वरिष्टा च केदारकटुका तथा ॥४०॥ आमघ्नो सादनी चैव तथैव कटुरोहिणी । प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ ४१ ॥ विप्रांगी मत्स्यशकला जनी 'धन्वनिघण्टके' । तथा द्विजांगी सिंही च ब्राह्मणांगी तु 'कैयके' ॥ ४२ ॥ तथा 'मदनपाले' तु भद्रा प्रोक्ता मनीषिभिः । कटंभरा त्वशोका च प्रोक्ता 'भावप्रकाशके' ॥४३॥ तथा 'गणनिघण्टे' च मत्स्यविन्ना प्रकीर्तिता।

गुणाः—कटुकातिकटुस्तिक्ता शीतपित्तास्रदोषजित् ॥४४॥ बलासारोचकश्वासज्वरहृद्रेचनी 'नृपे' । 'गणे' तु कामलाघ्नीति विषमज्वरहृत् 'धने' ॥ ४५ ॥ भेदिनी दीपनी रूक्षा कफपित्तज्वरापहा । प्रमेहश्वासकासघ्नी कुष्ठकृमिविनाशिनी ॥ ४६ ॥ क्षयहृत् 'कैयदेवे' च संप्रोक्ता भिषजां वरैः ।

## ४० अतिविषा-अतीस ।

नामानि—श्वेतकन्दा तु विश्वा च भंगुरातिविषा तथा ॥ ४७ ॥ शृङ्गी विरूपा वीरा च विषरूपा महौषधी । चान्द्री विषा प्रतिविषा श्यामकन्दाऽमृता तथा ॥ ४८ ॥ ततः श्वेतवचा चैव त्वरुणोपविषा तथा । प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रविशारदैः ॥ ४९ ॥ शुक्लकन्दा तु श्वेताद्र्रा विषदा तु घुणप्रिया । पित्तादिवल्लभा प्रोक्ता बालरोगविनाशिनी ॥ ५० ॥ 'धन्वन्तरिनिघण्टे' तु प्रोक्ता वैद्यविशारदैः । 'कैयदेवनिघण्टे' तु घुणा चोपविषाणिका ॥ ५१ ॥ तथा 'भावप्रकाशे' च संप्रोक्ता घुणवल्लभा ।

गुणाः—कटूष्णातिविषा तिक्ता कफपित्तज्वरापहा ॥ ५२ ॥ आमातिसारकासघ्नी विषच्छार्दिविनाशिनी । 'नृपे' प्रोक्ता तथा 'कैये' कफपित्तातिसारजित् ॥ ५३ ॥ दीपनी पाचनी चैव कृमिरोगविनाशिनी । तद्बीजं वातशमनं 'मदने' वाजिकारणम्॥ ५४ ॥

## ४१ भद्रमुस्ता-भद्रमोथा ।

नामानि—भद्रा मुस्ता वारिदा च जीमूतोब्दस्तु नीरदः । मेघोम्भोदो घनश्चाभ्रं गांगेयो भद्रमुस्तकः ॥ ५५ ॥ वराही गुन्द्रग्रन्थिश्च भद्रकासी कसेरुकः । क्रोडेष्टा कुरुविंदाख्या सुगन्धिग्रन्थिला हिमा ॥ ५६ ॥ वन्या राजकसेरुश्च कच्छोत्था 'राजनामके' । जलदोंबुधरश्चैव वृषध्वांक्षी बलाहकः ॥ ५७ ॥ 'धन्वन्तरिनिघण्टे' च नादेयः

परिकीर्तितः। तथा वारिदनामा च गुन्द्रा क्रोडकसेरुकः ॥ ५८ ॥ प्रोक्ता 'भावप्रकाशे' तु संख्यातश्च न संशयः।

गुणाः—भद्रमुस्ता कषाया च तिक्ता शीता च पाचनी ॥ पित्तज्वरकफघ्नी च संग्राही 'राजनामके'। श्लेमरक्तातिसारघ्नी तृष्णा कृमिहरा 'धने' ॥६०॥ 'द्रव्ये' तु रक्तपित्तघ्नी 'भावे' ग्राहीति दीपनी।

## ४२ नागरमुस्ता-नागरमोथा।

नामानि—ततो नागरमुस्ता च नगरोत्था तदुत्तरं ॥ ६१ ॥ नगरादिर्घनश्चैव चक्रांका तदनन्तरं। नादेयी पिंडुमुस्ता च चूडाला शिशिरा तथा ॥ ६२ ॥ वृषध्वांक्षी कच्छरुहा पूर्णकोष्ठः कलापिनी। तथानुकेसरोच्चाटा संप्रोक्ता 'राजनामके' ॥ ६३ ॥

गुणाः—अथ नागरमुस्ता तु तिक्ता कटु कषायका। शीतला कफहंत्रीति पित्तज्वरविनाशिनी ॥ ६४ ॥ अतिसारारुचिहरा तृट्-दाहश्रमहा 'नृपे'।

## ४३ यष्टीमधु-मुलेठी।

नामानि—यष्टीमधुर्मधुयष्टी मधुवल्ली मधुस्रवा ॥ ६५ ॥ मधुकं मधुका यष्टी यष्ट्याव्हं 'राजनामके'। यष्टीकं चैव संप्रोक्तं 'धन्वन्तरिनिघंटके' ॥ ६६ ॥ नवसंख्या भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः।

गुणाः—अथ यष्टीमधुः प्रोक्तं मधुरं स्वल्पतिक्तकं ॥ ६७ ॥ शीतलं चैव चक्षुष्यं पित्तहृद्रुचिकारकं। शोषतृष्णाव्रणघ्नं च 'राजनामनिघंटके' ॥ ६८ ॥ वृष्यं शोषक्षयहरं विषच्छर्दिविनाशनं। रसे स्वादु तथा शीतपित्तघ्नं 'धन्वनामके' ॥ ६९ ॥ वर्ण्यं स्निग्धम् शुक्लं च केश्यं स्वर्यं तथैव च। रक्तवातविषच्छर्दिग्लानिशोकहरं 'कये' ॥७०॥ 'भावे' क्षयापहं चैव 'गणे' तु व्रणशोधनं।

## ४४ मधुवल्ली-मुलैठी भेद।

नामानि—मधुकं मधुवल्ली च मधूलो क्लीतनीयकं ॥ ७१ ॥ ततः क्लीतनकं चैव तथा मधुरसा स्मृता। मधुरलताऽतिरसा सौम्या शोषापहा तथा ॥ ७२ ॥ स्थलजा जलजा चैव प्रोक्ता 'राजनिघण्टके'।

क्रीतिका क्रीतनं चैव मधुपर्णी मधूलिका ॥ ७३ ॥ 'धन्वंतरिनिघंटे' तु संप्रोक्तं भिषजां वरैः ।

गुणाः—क्रीतनं मधुरं रुच्यं वल्यं वृष्यं व्रणापहं ॥ ७४ ॥ शीतलं गुरु चक्षुष्यमस्रपित्तापहं 'नृपे' ।

## ४५ भार्गी-भारंगी ।

नामानि—भार्गी गर्दभशाकश्च फंजी चांगारवल्लरी ॥ ७५ ॥ वर्ची ब्राह्मणयष्टिश्च वातारिः कासजित्परं । पद्मा यष्टिश्च भारंगी सुरूपा भृङ्गजा तथा ॥७६॥ भ्रमरेष्टा शक्रमाता बर्बरो 'राजनामके' । बर्बरको शुक्रमाता कासघ्नी भार्गवाग्रणी ॥ ७७ ॥ प्रोक्ता 'धन्वनिघंटे' तु भिषग्विद्याविशारदैः । खरशाकांगारपर्णी महागर्दभगंधिका ॥७८॥ भंगुरा भृगुजा चैव पालिन्दी भार्गपर्वणी । 'कैयदेवनिघंटे' तु प्रोक्ता वैद्यविचक्षणैः ॥ ७९ ॥ 'द्रव्यरत्नाकरे' चैव द्विजेति परिकीर्तिता । भृगूद्भवा भृगुभवा ब्राह्मी तु गंधपर्वणी ॥ ८० ॥ 'मदे' प्रोक्ता 'गणे' चैव महाबर्बरिका तथा । मांगल्यवल्लिका चैव तत 'स्त्वमरकोशके' ॥ ८१ ॥ हंजिका फंजिका चैव ब्राह्मणी वर्धकस्तथा । वालेयशाकं संप्रोक्तं वैद्यविद्याविशारदैः ॥ ८२ ॥

गुणाः—भार्गी कट्वी च तिक्तोष्णा कासश्वासविनाशनी । शोफव्रणकृमिघ्नी च दाहज्वरहरा 'नृपे' ॥ ८३ ॥ द्रव्ये समीरजित् प्रोक्ता 'भावे' स्याद्रक्तगुल्महृत् । वातज्वरप्रहंत्री च 'गणे' हिक्काविनाशनी ॥ ८४ ॥ गुल्मज्वरासृक्वातघ्नी यक्ष्मपीनसहृत् 'धने' । कषाया चैव संप्रोक्ता लघु दीपनपाचनी ॥ ८५ ॥ रूक्षा शोफहरा चैव कफवातरुचिघ्निका । गुल्मार्शोयक्ष्महृत् प्रोक्ता 'कैयदेवनिघंटके' ॥ ८६ ॥

## ४६ पुष्करमूलं-पोहकर मूल ।

नामानि—मूलं पुष्करमूलं च पुष्करं पद्मपत्रकं । पद्मं पुष्करजं वीजं पौष्करं पुष्कराव्हयम् ॥८७॥ काश्मीरं ब्रह्मतीर्थं च कासारिर्मूलपुष्करं । तथैव पुष्करजटा पुष्कराद्या शिफा तथा ॥८८॥ प्रोक्तं 'राजनिघंटे' तु वैद्यशास्त्रस्य पंडितैः । चिरंतनं तथा वीरं चिरं श्वासारिरेव च ॥ ८९ ॥ पद्मतीर्थं वृक्षरुहं तथा पुष्करसागरं, । तथा शूलहरं चैव समूलं सुखसम्भवं ॥९०॥ स्थलपद्मिनीकंदश्च 'धन्वंतरिनिघंटके' । पद्मवर्णं तु वाह्याव्हं पुण्यसागरमेव च ॥ ९१ ॥

पुष्करांघ्रिर्मूलवीरं तथैव च सुगन्धिकं । 'कैयदेवनिघण्टे' तु संप्रोक्तं भिषजांवरैः ॥ ९२ ॥

गुणाः—अथ पुष्करमूलं तु कटूष्णं तिक्तमेव च । कफवातज्वरघ्नं च कासारोचकफापहं ॥ ९३ ॥ शोफपांडुहरं चैव प्रोक्तं 'राजनिघंटके' । 'गणे' शूलहरं प्रोक्तं वैद्यविद्याविशारदैः ॥ ९४ ॥ 'धन्वे' हिक्कापहं चैव शोकाध्मानविनाशनं । हिध्मापहं भेदनं च पार्श्वशूलहरं 'कये' ॥ ९५ ॥ 'भावे' शोथहरं प्रोक्तं भिषग्भिःशास्त्रवेतृभिः ।

## ४७ शृंगी-काकडासिंगी ।

नामानि—शृंगी कुलीरशृंगी च घोषा तु वनमूर्धजा ॥ ९६ ॥ चंद्रा कर्कटशृंगी च महाघोषा च शृंगिका । कलिंगा चेंदुखंडा च तथा वनजमूधजा ॥९७॥ कुलीरा च तथा प्रोक्ता 'धन्वंतरिनिघण्टके' कर्कटाख्या कर्कटकी कुलीरो 'कैयदेवके' ॥ ९८ ॥ तथा 'मदनपाले' तु शृंगनाम्नीति कथ्यते । 'भावप्रकाशे' संप्रोक्ता स्यात्कुलीरविषाणिका ॥ ९९ ॥ अजशृङ्गीति कविभिर्भिषक्शास्त्रविशारदैः । तथा 'गणनिघण्टे' तु संप्रोक्ता चार्थचंपिका ॥ ३०० ॥

गुणाः—अथ कर्कटशृङ्गी तु तिक्ता चैव गुरूष्णदा । वातहिक्कातिसारघ्नी कासश्वासहरा तथा ॥ १ ॥ पित्तास्रहन्त्री संप्रोक्ता वैद्यै 'राजनिघण्टके' । 'भावे' तृट्नाशिनी प्रोक्ता पुरातन चिकित्सकैः ॥ २ ॥ हिध्मोर्ध्ववातहा प्रोक्ता 'धन्वनामनिघण्टके' । क्षयारुचिज्वरघ्नीति वमिहन्त्रीति 'कैयके' ॥ ३ ॥ कार्श्यहन्त्रीति 'मदने' भिषग्भिः परिकीर्तिता ॥ ४ ॥

## ४८ लघुदन्ती-छोटी दन्ती ।

नामानि—दन्ती शीघ्रा श्येनघण्टानागस्फोटा निकुम्भिनी ॥५॥ दन्तिनी तूपचित्रा च भद्रा रूक्षा च रोचनी । चानुकूला निःशल्या च वक्रदन्ता तथैव च ॥ ६ ॥ मधुपुष्पा विशल्या च तरुण्यैरंडपत्रिका । तथैरंडफला चैव उदुम्बरदला तथा ॥ ७ ॥ कुंभी विशोधिनी चैव तथास्यादनुरेवती । प्रोक्ता 'राजनिघण्टे' तु भिषग्भिः शास्त्रपारगैः ॥ ८ ॥ 'धन्वन्तरिनिघण्टे' तु घुणप्रिया मकूलकः । निकुंभा चित्रकूला च तथा स्यादुपचित्रका ॥ ९ ॥ द्राक्षायनी शामला च तथा मदनकूलका । आस्या द्रवन्ती शबरी फंजी न्यग्रो-

धका स्मृता ॥ १० ॥ प्रत्यक्श्रेणी सुतश्रेणी तथा मूषिकसंभवा। वृषैरण्डाखुकर्णी च जयैरंडफला तथा ॥ ११ ॥ उदुम्बरच्छदा चैव विजया 'कैयदेवके' । नागदन्त्याखुपर्णी च प्रोक्ता 'मदनपालके' ॥१२॥ वाराहांग्यनुकूला च प्रोक्ता 'भावप्रकाशके' । मुकूलिका तथा कूला चिद्रकेशा 'गणे' स्मृता ॥ १३ ॥

गुणाः—दन्ती कटूष्णा विख्याता ह्यामशूलविनाशनी । त्वग्दोषहृत् भिषक्श्रेष्ठैः प्रोक्ता 'राजनिघण्टके' ॥ १४ ॥ रसे तिक्तोष्णका चैव कफोदरविनाशिनी । वातोदरार्शहंत्री च व्रणघ्नी दीपनी 'धन्वे' ॥ १५ ॥ कफवातार्शगुल्मघ्नी क्षयहृत 'द्रव्यनामके' । रक्तघ्नी कुष्ठकंडुघ्नी कफोदरविनाशिनी ॥ १६ ॥ दाहहंत्रीति कविभिः प्रोक्ता 'भावप्रकाशके' ।

## ४९ बृहद्दन्तिका-बड़ी दन्ती ।

नामानि—अन्या दन्ती केशरुहा विषभद्रा जयावहा ॥ १७ ॥ आवर्तकी वरांगी च जयाव्हा भद्रदन्तिका । भिषक्भद्रा तथा प्रोक्ता 'राजनामनिघण्टके' ॥ १८ ॥ 'धन्वन्तरिनिघण्टे' तु वरणी विषभद्रिका । 'कैयदेवनिघण्टे' तु वारणा वृषभध्वजा ॥ १९ ॥ प्रोक्ता द्वादशसंख्याका वैद्यविद्याविचक्षणैः ।

गुणाः—बृहद्दन्ती कटूष्णा च रेचनी कृमिशूलहा ॥ २० ॥ कुष्ठामोदररोगघ्नी प्रोक्ता 'राजनिघण्टके' । तथा शूलाश्मरीहन्त्री 'द्रव्यरत्ने' प्रकीर्तिता ॥ २१ ॥ रसे पाके कटुश्चैव दीपनी कफनाशनी । पित्तास्रकृमिहृच्चैव शोफोदरहरा 'मदे' ॥ २२ ॥ आनाहप्लीहहंत्रीति 'गणे' प्रोक्ता भिषक्जनैः ।

## ५० जेपालः ।

नामानि—रेचको जयपालश्च सारकस्तित्तिरीफलम् ॥ २३ ॥ दन्तीबीजं मलद्रावी ज्ञेयं स्याद्बीजरेचनी । कुन्तिनीबीजसंज्ञं च कुम्भीबीजं तु शोधनी ॥ २४ ॥ घंटाबीजं चक्रदन्ती दन्तिनीबीजकं तथा । निकुम्भबीजं बीजाख्यं प्रोक्तं 'राजनिघण्टके' ॥२५॥ 'धन्वन्तरिनिघण्टे' च निकुम्भा परिकीर्तिता । 'द्रव्यरत्नाकरे' चैव तित्तिरेति स्मृता बुधैः ॥ २६ ॥ दन्ती द्रवन्तिका चैव मूलकं 'कैयदेवके' । प्रोक्ता विंशतिसंख्येत भिषक्विद्यापरायणैः ॥ २७ ॥

गुणाः—जेपालः कटुरुष्णश्च कृमिहारी विरेचनः। दीपनः कफवातघ्नो जठरामयहा 'नृपे' ॥ २८ ॥ 'द्रव्ये' भेदी वांतिकृच्च श्लेष्मोदरविनाशनः। 'मदने' गुरु स्निग्धश्च पित्तोद्भवकफापहः ॥ २९ ॥ रसे पाके च मधुरो कासहा 'भावनामके'।

## ५१ त्रिवृत्-निशोत।

नामानि—त्रिवृन्मालविका चैव श्यामा तु मसुरा तथा ॥ ३० ॥ अर्धचन्द्रा सुषेणी च कालिन्दी विदला तथा। कालमेषी तु काली च त्रिवेला 'राजनामके' ॥ ३१ ॥ 'धन्वन्तरिनिघण्टे' तु सुषेणा च तथा स्मृता। मालवीका तु सरला काला केशाधिका फला ॥ ३२ ॥ कालपर्णी तथा 'कैये' पालिन्दी 'द्रव्यनामके'। मसूरविदला चैव कालकेशीति 'भावके' ॥ ३३ ॥ तथा 'गणनिघण्टे' तु कषाया मधुरा स्मृता।

गुणाः—त्रिवृत्तिक्ता कटूष्णा च कृमिश्लेष्मोदरार्तिजित् ॥ ३४ ॥ कुष्ठकंडूव्रणान्हन्ति रेचनी 'राजनामके'। पित्तज्वरापहन्त्री च प्रोक्ता 'भावप्रकाशके' ॥ ३५ ॥ कफपित्तहरा रूक्षा मधुरा वातकृत् 'धने'। ज्वरशोफोदरप्लीहव्रणपांडुहरा 'कये' ॥ ३६ ॥

## ५२ रक्तत्रिवृत्-लाल निसोत, तेड़।

नामानि—रक्तान्या चैव कालिन्दी त्रिपुटा ताम्रपुष्पिका। कुलवर्णा मसूरी चाप्यसृता कासनाशिका ॥ ३७ ॥ प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रज्ञपंडितैः। शुक्लभंडी त्रिभंडी स्यात्काकाक्षी सरला त्रिवृत् ॥ ३८ ॥ सर्वानुभूतिस्त्रिपुटा त्र्यस्रा कोटरवासिनी। 'धन्वन्तरिनिघंटे' तु प्रोक्ता वैद्यविशारदैः ॥ ३९ ॥ कोटरस्थारुणा कुम्भः संप्रोक्ता 'कैयदेवके'। सिता त्रिभंडिका कुम्भी 'द्रव्यरत्नाकरे' स्मृता ॥ ६८ ॥ सर्वानुभूतिस्त्रिवृता भंडी कोटरवाहिनी। प्रोक्ता 'मदनपाले' तु पुरातनचिकित्सकैः ॥ ४० ॥ निशोता रेचनो चैव त्रिवृत्ता 'भावनामके'। रसायनी कुंभपुटा त्रिवेला तदनन्तरं ॥ ४१ ॥ यथा कोशफला प्रोक्ता 'गणनामनिघंटके'।

गुणाः—रक्ता त्रिवृद्रसे तिक्ता कटूष्णा रेचनी तथा ॥ ४२ ॥ ग्रहणी मलविष्टंभहारिणी 'नृपनामके'। श्यामा हीनगुणा चैव कंठकर्षणदायका ॥ ४३ ॥ मोहमूर्च्छादाहहारी भ्रमहृ 'त्कैयदेवके'।

## ५३ त्वचं-दालचीनी ।

नामानि—त्वचं त्वग्वल्कलं भृंगं वरांगं मुखशोधनं ॥ ४४ ॥ शकलं सैंहलं वन्यं सुरसं रामवल्लभं । उत्कटं बहुगन्धं च विज्जुलं च वनप्रियं ॥ ४५ ॥ लाटपर्णं गन्धवल्कं वरं शीतं तथा 'नृपे' । मुखशोध्यं प्रियं चैव 'धन्वन्तरिनिघंटके' ।। ४६ ।। गुडत्वचं तु हृद्यं च तनुकं स्वर्णभूमिका । लटपर्णं तथा चोचं तथैव धनसंज्ञकं ॥ ४७ ॥ रामाप्रियं 'केयदेवे' प्रोक्तं वैद्यविशारदैः । मनःप्रियं तथा 'द्रव्ये' गुरुत्वक् स्वर्णभूमिकं ॥ ४८ ।। प्रोक्तं 'मदनपाले' तु स्वाद्वी दारुसिता तथा। तनुत्वक् च तथा प्रोक्तं 'भावनामनिघंटके' ॥ ४६ ॥

गुणाः—त्वचं तु कटुकं शीतं कफकासविनाशनं । शुक्रामशमनं चैव कंठशुद्धिकरं 'नृपे' ॥ ५० ॥ हृद्बस्तिरोगवातार्शः पीनसक्रमिशुक्रनुत् । विषदं च तथा प्रोक्तं वैद्यैर्मदनपालके ।। ५१ ।। 'भावे' त्वरुचिकंडूघ्नं वैद्यैः प्रोक्तं पुरातनैः । लघूष्णं कफवातघ्नं विषशीर्षरुजां हरं ॥ ५२ ॥ बस्तिशोधनमित्येतत् प्रोक्तं 'धन्वनिघंटके' । तिक्तं स्वादूष्ण मधुरं रूक्षं पित्तलमेव च ॥ ५३ ॥ हृद्रोगबस्तिशमनं दुर्नामहरणं तथा । आमवातहरं चैव शुक्रहृत् 'केयदेवके' ।५४।

## ५४ तमालपत्र-तेजपात ।

नामानि—पत्रं तमालपत्रं च पत्रकं छदनं दलं । पलाशमंशुकं वासस्तापकं सुकुमारकं ॥ ५५ ॥ वस्त्रं तमालकं रामं गोपनं वसनं तथा । तमालं सुरभिगन्धं प्रोक्तं 'राजनिघंटके' ॥ ५६ ॥ तथा तापसजं प्रोक्तं 'धन्वन्तरिनिघंटके' । तामसं रोमशं रोमं पंचकं 'केयदेवके' ॥ ५७ ॥ शुक्रच्छदं 'द्रव्यरत्ने' भिषग्भिः परिकीर्तितं । गोमेदं तु छदं चैव प्रोक्तं 'मदनपालके' ॥ ५८ ॥ कालस्कन्धस्तमालश्च तापिच्छा 'मरकोशके' ।

गुणाः—पत्रकं लघु तिक्तोष्णं कफवातविषापहं ॥ ५६ ॥ बस्तिकन्ड्वति दोषघ्नं मुखमस्तकशोधनं । 'राजनामनिघंटे' च संप्रोक्तं भिषजां वरैः ॥ ६० ॥ हृल्लासारोचकार्शोघ्नं 'धन्वन्तरिनिघंटके' । 'केये' तु भिषजां नाथैः संप्रोक्तं लघुपिच्छलं ॥ ६१ ॥ स्वर्यः श्लेष्महरं हृद्यं कफपित्तक्षयापहं ।

## ५५ नागकेशर ।*

नामानि—किंजल्कं कनकाव्हं च केसरं नागकेसरं ॥ ६२ ॥ चांपेयं नागकिंजल्कं नागीयं कांचनं तथा। सुवर्णं हेमकिंजल्कं रुक्मं हेम च पिंजरं ॥ ६३ ॥ फणिपन्नगयोगादिकेसरं 'राजनामके'। नागपुष्पं तु नागं च कनकं 'धन्वनामके' ॥ ६४ ॥ नागाव्हमहिपुष्पं च महापुष्पं हिमाभकं। वरं तथा दुरोहं च नागरेणुकमेव च ॥६५॥ 'कैयदेवनिघंटे' च प्रोक्तं वैद्यविचक्षणैः। 'द्रव्यरत्नाकरे' चैव पुष्पाव्हं हेमपुष्पकं ॥ ६६ ॥ तथा 'मदनपाले' तु गजं प्रोक्तं मनीषिभिः। नागस्तु केसरश्चैव प्रोक्तं 'भावप्रकाशके' ॥ ६७ ॥

गुणाः—नागकेसरमल्पोष्णं लघु तिक्तं कफापहं। वस्तिवातामयघ्नं च कंठशीर्षरुजापहम् ॥ ६८ ॥ प्रोक्तं 'राजनिघण्टे' च पुरातनचिकित्सकैः। विषकंडूशोषहरं वातरक्तहरं 'धने' ॥ ६९ ॥ लघ्वामपाचनं रूक्षं पित्तोद्भवकफापहं। छर्दिकंडूविसर्पघ्नं खुडहं 'कैयदेवके' ॥ ७० ॥ 'द्रव्ये' रक्तविकारघ्नं 'मदे' दौर्गन्धकुष्ठहं। त्रिदोषहं पूर्वमुक्तं 'भावे' हल्लासहारकं ॥ ७१ ॥

## ५६ तवक्षीर–तीखुर ।

नामानि—तवक्षीरं पयःक्षीरं यवजं गवयोद्भवं। अन्यद्गोधूमजं चान्यत्पिष्टिकातंडुलोद्भवं ॥ ७२ ॥ तथैव तालसम्भूतं तालक्षीरादिनामकं। वनगोक्षीरजं श्रेष्ठं 'राजनामनिघण्टके' ॥ ७३ ॥ वंश्या गोधूमसम्भूता वंशक्षीरी तथैव च। पलाशगन्धा संप्रोक्ता 'धन्वन्तरिनिघण्टके' ॥ ७४ ॥ 'अमरे' पार्थिवी प्रोक्ता वैद्यशास्त्रज्ञपंडितैः ॥ ७५ ॥

गुणाः—तवक्षीरं तु मधुरं शिशिरं दाहपित्तहं। क्षयकासकफश्वासरक्तदोषहरं 'नृपे'॥ ७६ ॥ कृच्छ्राश्मरीमेहनघ्नं 'द्रव्यरत्नाकरे' स्मृतं। बल्या वृष्या च बृंहणी रक्तपित्तारुचिघ्निका ॥ ७७ ॥ ज्वरकुष्ठहरा चैव कामलापांडुतृष्णहा। 'कैयदेवे' भिषक्श्रेष्ठैः संप्रोक्ता नैव संशयः ॥ ७८ ॥

---

*पुन्नाग अर्थात् सुरङ्गीकी सूखी कलीको नागकेसर कहते हैं।

## ५७ तालीसपत्र ।

नामानि—तालीसपत्रं तालीसं पत्राख्यं च शुकोदरं । धात्रीपत्रं चार्कवेधं करिपत्रं घनच्छदम् ॥७६॥ नीलं नीलाम्बरं तालं तालीपत्रं तलाह्वयं । तालीसपत्रकं चैव 'राजनामनिघण्टके' ॥ ८० ॥ तथा चामलकीपत्रं तद्वत्तालीसकं तथा । तमालकीपत्रसंज्ञं तथा तमालकीच्छदं ॥ ८१ ॥ शुकोदरं च पत्राढ्यं प्रोक्तं 'धन्वन्तरौ' ध्रुवं । धात्रीपत्रं कन्दपत्रं तुलसीपत्रसंज्ञकं ॥ ८२ ॥ पत्रं तु 'कैयदेवे' च 'मदने' तुलसीच्छदं । पत्राह्वं ग्रन्थिकापत्रं संप्रोक्तं वैद्यनायकैः॥८३॥

गुणाः—तालीसपत्रं तिक्तं स्यादुष्णं मधुरमेव च । कफवातहरं कासहिक्काक्षय विनाशनं ॥ ८४ ॥ श्वासछर्दिहरं प्रोक्तं वैद्यै 'राजनिघण्टके' । 'मदने' कृमिहृत्प्रोक्तं पुरातनचिकित्सकैः ॥८५॥ दीपनं श्लेष्मपित्तघ्नं मुखरोगहरं ध्रुवं । हृद्यं 'धन्वनिघण्टे' च संप्रोक्तं वैद्यनायकैः ॥ ८६ ॥ 'कैये' त्वरुचिगुल्मामानग्निमाद्यं च निघ्नति । वैद्यै 'र्द्रव्यनिघण्टे' च स्वयं प्रोक्तं न संशयः ॥ ८७ ॥

## ५८ वंशलोचना-वंशलोचन ।

नामानि—स्याद् वंशरोचना वांशी तुंगाक्षीरी तुगा शुभा । त्वक्क्षीरी वंशगा शुभ्रा वंशक्षीरी तु वैष्णवी ॥ ८८ ॥ त्वक्सारा कर्मरी श्वेता वंशकर्पूररोचना । तुंगा रोचनिका पिंगा तथैव वंशशर्करा ॥८९॥ प्रोक्ता 'राजनिघण्टे' तु पुरातनचिकित्सकैः । वंशा तु वंशजा चैव 'धन्वन्तरिनिघण्टके' ॥ ९० ॥ 'कैयदेवे' तु संप्रोक्ता क्षीरिका वंशवर्द्धिनी ।

गुणाः—स्याद्वंशरोचना रूक्षा कषाया मधुरा हिमा ॥ ९१ ॥ रक्तशुद्धिकरी तापपित्तोद्रेकहरा 'नृपे' । तिक्ता च कासकृच्छ्रघ्नी क्षयश्वासहिता तथा ॥ ९२ ॥ बल्या च बृंहणी चैव 'धन्वन्तरिनिघण्टके' । कुष्ठपांडुव्रणघ्नं च 'भावे' प्रोक्तं भिषक्जनैः ॥९३॥ ज्वरघ्नी कामलाघ्नी च वृष्या तृष्णाविनाशनी । रक्तपित्तहरा चैव प्रोक्तं 'मदनपालके' ॥ ९४ ॥

## ५९ मंजिष्ठा-मजीठ ।

नामानि—मंजिष्ठा हरिणी रक्ता गौरी योजनवल्लिका । समंगा

विकसा पद्मा रोहिणी कालमेषिका ॥ ९५ ॥ भण्डी चित्रलता चित्रा चित्राङ्गी जननी तथा । मण्डूकपर्णी विजया मंजूषा रक्तयष्टिका ॥ ९६ ॥ क्षेत्रिणी चैव रागाढ्या भण्डीरी कालभण्डिका । अरुणा ज्वरहन्त्री च छद्मा नागकुमारिका ॥ ९७ ॥ भंडीरतिलका चैव रागाङ्गी वस्त्रभूषणा । प्रोक्ता 'राजनिघण्टे' तु भिषक्शास्त्रज्ञपंडितैः ॥ ९८ ॥ जिंगी भांडी च कालांगी रक्तांगी मंजुका तथा । काला तु रक्तयष्टी च प्रोक्ता 'धन्वनिघण्टके' ॥ ९९ ॥ लोहिता छद्मका ताम्रा भण्डीरा मंजुला तथा । ताम्रवल्ली ताम्रमुखी प्रोक्ता 'कैयनिघण्टके' ॥ ४०० ॥ मंजुरा पद्मका मंजी 'मदने' ज्वरनाशिनी । भंडीतकी तु भण्डारी तथा च वस्त्ररंजिनी ॥ १ ॥ रसायनी च संप्रोक्ता 'राजनामनिघण्टके' । ताम्रमूला कालपेशी रक्तपुष्पी 'गणे' स्मृता ॥२॥

गुणाः—मंजिष्ठा मधुरा स्वादे कषायोष्णा गुरुस्तथा । व्रणमेहापहन्त्री च श्लेष्मज्वरतृपापहा ॥ ३ ॥ नेत्ररोगहरा चैव प्रोक्ता 'राजनिघण्टके' । 'भावे' त्वशोंघ्निका प्रोक्ता वैद्यविद्याविचक्षणैः ॥ ४ ॥ स्वर्या वर्ण्यातिविख्याता योनिशूलकफापहा । विसर्पशोषकुष्ठघ्नी वातरक्तातिसारजित् ॥ ५ ॥ वातपित्तापहन्त्रीति प्रोक्ता 'कैयनिघण्टके' ।

## ९० हरिद्रा-हल्दी ।

नामानि—हरिद्रा तु हरिच्चैव रंजनी दीर्घरागिका ॥ ६ ॥ स्वर्णवर्णा सुवर्णा च वर्णिनी तु शिवा तथा । हरिद्री चैव पीता च वरांगी तदनन्तरं ॥७॥ वरा जनिष्ठा गौरी च वर्णदात्री पवित्रका । हरिता रजनीनाम्नी विषघ्नी वरवर्णिनी ॥ ८ ॥ पिंगला वर्णिनी चैव मङ्गल्या मङ्गला तथा । लक्ष्मी भद्रा शिफा शोभा शोभना सुभगाह्वया ॥ ९ ॥ श्यामा जयन्तिका चैव 'राजनामनिघण्टके' । तथा पिण्डहरिद्रा च पीतिका 'गणनामके' ॥ १० ॥ हलदिका भद्रलता तथा वर्णविलासिनी । दीर्घरङ्गा रङ्गिणी च गौरवर्णवती निशा ॥ ११ ॥ 'धन्वन्तरिनिघण्टे' तु संप्रोक्ता वैद्यनायकैः । ततो रोमशमूला च वरिष्ठा 'विश्वनामके' ॥ १२ ॥ राजिनी चैव पिण्डा च पीताङ्गा 'कैयदेवके' । तथा 'मदनपाले' तु पिण्डी चैव प्रकीर्तिता ॥१३॥ काञ्चनी तु कृमिघ्ना च तथा योषित्प्रिया मता । तथा 'भावप्रकाशे' च प्रोक्ता हटविलासिनी ॥ १४ ॥

गुणाः—हरिद्रा कटु तिक्तोष्णा कफवातास्रकुष्ठहा । मेहकंडू-व्रणघ्नी च देहवर्णकरी 'नृपे' ॥ १५ ॥ रूक्षा विषापहा चैव शोधनी कृमिहा तथा । पीनसारुचिहन्त्रीति प्रोक्ता 'धन्वन्तरौ' ध्रुवं ॥१६॥ कफपित्तापहन्त्री च पांडुऽहापचिनाशनी । त्वग्दोषशोथहा प्रोक्ता 'कैयदेवनिघंटके' ॥ १७ ॥ रक्तमेहहरा प्रोक्ता 'मदने' वैद्यनायकैः ।

## ६१ दारुहरिद्रा-दारुहलदी ।

नामानि—दारुहरिद्रा दार्वी च पीतद्रुः पीतिका तथा ॥ १८ ॥ कालेयकं पीतदारुः स्थिररागा च कामिनी । कटंकटेरी पर्जन्या पीतदारु स्तथैव च ॥१६॥ कालीयकं दारुनिशा ततो कामवती मता । कर्कटकी दारुपीना पचंपचेति 'राजके' ॥ २० ॥ ततस्तु काष्ठरजनी पीतचन्दनमेव च । कालीयका च पीता च हेमवर्णवती तथा ॥ २१ ॥ कुसुम्भका हेमकान्ता प्रोक्ता 'धन्वन्तरौ' ध्रुवं । कटंकटी 'कैयदेवे' प्रोक्ता वैद्यविचक्षणैः ॥ २२ ॥ पर्जनी पीतकं चैव कालेया च हरिद्रुकः । निशा तथा पीतकं च प्रोक्ता 'भावप्रकाशके' ॥ २३ ॥ रात्रिदारुः क्षपा चैव प्रोक्ता 'गणनिघण्टके' । हरिद्रस्तु तथा 'कोशे' प्रोक्ता वैद्यविशारदैः ॥ ८३ ॥

गुणाः—अथ दारुहरिद्रा तु कटूष्णा तिक्तका तथा । व्रणकंडू-मेहहरा विसर्पघ्नी विषापहा ॥८४॥ त्वग्दोषकर्णरोगघ्नी नेत्ररोगहरा 'नृपे' । मुखरोगहरा रूक्षा 'धन्वन्तरिनिघण्टके' ॥ ८५ ॥ पांडुशोथा-पचिघ्नीति 'कैये' प्रोक्ता भिषग्जनैः ।

## ६२ लाक्षा-लाख ।

नामानि—लाक्षा खदिरका रक्ता रङ्गमाता पलंकषा ॥ २७ ॥ जन्तुजा कृमिजा चैव द्रुमव्याधिरलक्तकः । पलाशी मुद्रिणी दीप्ति-र्जन्तुका गन्धमादनी ॥ २८ ॥ नीला द्रवरसा चैव पित्तारि 'राज-नामके' । क्षतघ्नी कृमिजा चैव 'धन्वनामनिघण्टके' ॥२६॥ 'द्रव्यरत्ना-करे' चैव कृमिजं तु द्रुमामयः । निर्भत्सना च दीप्ताऽहा चालक्तो जावको तथा ॥ ३० ॥ प्रोक्ता 'मदनपाले' तु पुरातनभिषग्वरैः । कीटजा लोहिता राक्षा द्राविका क्षतहारिणी ॥ ३१ ॥ कृमिघ्नो कृमि-पाना च प्रोक्ता वैद्यविशारदैः ।

गुणाः—लाक्षा तिक्ता कषाया च श्लेष्मपित्तविषापहा ॥३२॥ शोषरक्तापहन्त्री च विषमज्वरहा 'नृपे'। हिक्काविनाशिनी चैव प्रोक्ता 'भावप्रकाशके' ॥ ३३ ॥ कृमिश्लेष्मव्रणघ्नी च भूतज्वरहरा 'धने'। हिमा त्रिदोषहन्त्रीति 'द्रव्यरत्ने' प्रकीर्तिता ॥ ३४ ॥ वर्ण्या बल्या च स्निग्धा च रक्तपित्तव्रणापहा। उरःक्षतविसर्पघ्नी कृमिकुष्ठहरा 'मदे' ॥ ३५ ॥

## ६३ अलक्तक-अलिता।

नामानि—अलक्तको जन्तुरसो रागो निर्भर्त्सनस्तथा। जननी जन्तुकारी च संघर्षा चक्रवर्तिनी ॥ ३६ ॥ जतुरसस्तथा चारूवर्तिनी 'धन्वनामके'। 'द्रव्यरत्नाकरे' चैव संप्रोक्ता व्यंगनाशिनी ॥ ३७ ॥

गुणाः—अलक्तकस्तु तिक्तोष्णः कफवातहरस्तथा। कण्ठरोगहरो रुच्यो व्रणदोषहरो 'नृपे' ॥ ३८ ॥ ततो 'मदनपाले' तु संप्रोक्तो व्यंगनाशनः।

## ६४ लोध्र-लोध।

नामानि—लोध्रो रोध्रो भिल्लतरुश्चिल्लकः कांडकीलकः ॥३९॥ तिरीटो लोध्रको वृक्षः शंबरो हस्तिरोध्रकः। तिलकः कांडहीनश्च शाबरो हेमपुष्पकः ॥ ४० ॥ भिल्ली शाबरकश्चैव प्रोक्तो 'राजनिघण्टके'। शबरी तिल्वकतरुस्तथा शबरपादपः ॥ ४१ ॥ तिरीटकस्तथा प्रोक्तो 'धन्वन्तरिनिघण्टके'। कानीनः पट्टिकश्चिल्लो 'कैयदेवनिघण्टके' ॥ ४२ ॥ तथा 'मदनपाले' तु सन्ततोद्भवनामकः तिल्योगालवसंज्ञश्च प्रोक्तो 'भावप्रकाशके' ॥ ४३ ॥ 'गणे' शुक्रः शाबरश्च मार्जन 'स्त्वमरकोशके'।

गुणाः—लोध्रः शीतः कषायश्च कफरक्तविषापहः ॥ ४४ ॥ चक्षुष्ये वातहृच्चैव 'राजनामनिघण्टके'। असृग्दरघ्नो 'मदने' 'कैयदेवे' सरस्तथा ॥४५॥ कफपित्तारुचिघ्नश्च तृषाशोफातिसारजित्। ग्राही च रक्तपित्तघ्नो प्रोक्तो 'भावप्रकाशके' ॥ ४६ ॥ तत्पुष्प कफपित्तघ्नं संग्राहीति स्मृतं बुधैः।

## ६५ श्वेतलोध्र-सफेद लोध।

नामानि—क्रमुकः पट्टिकारोध्रः कल्करोध्रो बृहद्दलः ॥ ४७ ॥ जीर्णबुध्नो बृहद्दलको जीर्णपत्रोक्षिभेषजः। शाबरः श्वेतरोध्रश्च गालवो

बहलत्वचः ॥ ४८ ॥ पट्टी लाक्षाप्रसादश्च वल्कलो 'राजनामके'। बृहत्पर्णः स्थूलवल्को 'धन्वन्तरिनिघण्टके' ॥ ४९ ॥ शीतश्च शांबरः श्वेतरोध्रो 'द्रव्यनिघण्टके' । घनत्वक् मार्जनश्चैव 'केयदेवनिघण्टके' ॥ ५० ॥

गुणाः—गुणैस्तु पूर्ववत् ज्ञेयं पट्टिकाख्यं च रोध्रकम् ।

## ६६ धातकी–धवई, धौ ।

नामानि—धातकी वन्हिपुष्पी च ताम्रपुष्पी तु दाहनी ॥ ५१ ॥ अग्निज्वाला सुभिक्षा च पार्वती बहुपुष्पिका । कुमुदा साधुपुष्पी च कुंजरा मद्यवासिनी ॥ ५२ ॥ गुच्छसंघा गुच्छपुष्पा तथैव लोध्र पुष्पिणी । तीव्रज्वाला वन्हिशिखा मद्यपुष्पेति 'राजके' ॥ ५३ ॥ धातुकी पार्वतीया च 'धन्वंतरिनिघंटके' । मदनीया पांशुभिक्षा मदनी 'केयदेवके' ॥ ५४ ॥ सीधुपुष्पी प्रमदनी त्वधःपुष्पी सुभक्षका। प्रोक्ता 'मदनपाले' तु पुरातनचिकित्सकैः ॥ ५५ ॥ 'भावे' प्रोक्ता धातुपुष्पी त्वमरे धृत पुष्पिका ।

गुणाः—धातकी कटुरुष्णा च मदकृद्विषनाशनी ॥ ५६ ॥ प्रवाहिकातिसारघ्नी विसर्पव्रणनाशनी । 'नृपे' प्रोक्ता तथा 'द्रव्ये' स्तंभिनी परिकीर्तिता ॥ ५७ ॥ गर्भसंस्थापनी चैव रक्तपित्तहरा 'धने'। शीता कषाया तृष्णाघ्नी विसर्पहारिणी तथा ॥ ५८ ॥ विषातिसारजंतुघ्नी 'केये' प्रोक्ता भिषक्जनैः । प्रित्तघ्नीति 'गणे' प्रोक्ता पुरातनचिकित्सकैः ॥ ५९ ॥

## ६७ समुद्रफल ।

नामानि—समुद्रनामप्रथमं पश्चात्फलमुदाहरेत् । समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥ ६० ॥

गुणाः—कटूष्णं समुद्रफलं वातभूतत्रिदोषहं । कफभ्रांतिहरं प्रोक्तं 'राजनामनिघंटके' ॥ ६१ ॥

## ६८ निर्विषा-निर्विषी ।

नामानि—निर्विषोपविषा चैव विषहा विषहंत्रिका । विविषा तु विषभवा ह्यविषा विषवैरिणा ॥ ६२ ॥ प्रोक्ता 'राजनिघंटे' तु सप्तसंख्या भिषग्जनैः ।

गुणाः—निर्विषा कटुशीता च कफवातास्रदोषहा अनेक-

विषदोषघ्नी व्रणसंरोपिणी 'नृपे' । श्वयथुश्लेष्मरोगघ्नी प्रोक्ता 'भावप्रकाशके' ॥ ६३ ॥

## ६९ विष-सामान्य विष ।

नामानि—विषमाहेयममृतं गरलं दारदं गरं । कालकूटं हरिद्रं च रक्तश्रृंगकमेव च ॥ ६४ ॥ नीलं च गरदं क्ष्वेडो घोरं हालाहलं हरं । मरं हलाहलं श्रृंगी भूगरं 'राजनामके' ॥ ६५ ॥

## ७० वत्सनाभ-बचनाग ।

नामानि—अमृत स्याद्वत्सनाभो विषमुग्रं महौषधं । गरलं मरणं नागं स्तोककं प्राणहारकं ॥ ६६ ॥ गरलं स्थावरादि स्यात्प्रोक्तं 'राजनिघंटके' । गरलाग्रं च मधुरं प्रोक्तं वैद्यविशारदैः ॥ ६७ ॥

गुणाः—वत्सनाभोतिमधुरः सोष्णो वातकफापहः । कंठरुक्सन्निपातिघ्नः पित्तसंशोधनो 'नृपे' ॥ ६८ ॥ 'द्रव्यरत्ने' योगवाही रसायनमिति स्मृतं । प्राणघ्नं च व्यवायीति विकाशी च मदावहं ॥ ६९ ॥ आग्नेयं भिषजां श्रेष्ठैः प्रोक्तं 'भावप्रकाशके' ।

## ७१ आम्लनिशा-आंबाहल्दी ।

नामानि—सटी सठी पलाशश्च षड्ग्रन्थाम्लनिशा वधूः ॥ ७० ॥ सुगंधमूला गंधाली शटिका च पलाशिका । सुभद्रा च तृणी दूर्वा गंधा पृथुपलाशिका ॥ ७१ ॥ हिमोद्भवा गन्धवधुः सुव्रता 'राजनामके' । चन्द्राणी चन्द्रगन्धा च दुर्विधेया च 'धन्वके' ॥ ७२ ॥ आम्रनिशा तथा प्रोक्ता 'द्रव्यनामनिघण्टके' । षड्ग्रन्थिका गन्धमूला कर्चूरश्च शटी तथा ॥ ७३ ॥ प्रोक्ता 'ह्यमरकोशे' च भिषक्विद्याविशारदैः ।

गुणाः—सठी तिक्तोष्णकाम्ला च ज्वररक्तकफापहा ॥ ७४ ॥ कण्डूव्रणास्यरोगघ्नो हृद्येति 'राजनामके' । सन्निपातज्वरघ्नी च कफकासहरा 'धने' ॥ ७५ ॥

## ७२ गंधपत्रा-कपूरकाचरी, सुगंधकचोरा ।

नामानि—गन्धपत्रा तु स्थूला च वनजा तिक्तकन्दका । सटिका चैव वन्या च तवक्षीर्यैकपत्रिका ॥७६॥ गन्धपीता पला शांता गन्धाढ्या गन्धपत्रिका । दीर्घपत्रा गन्धनिशा प्रोक्ता 'राजनिघण्टके' ।७७।

तथा गन्धपलाशश्च स्थूलकस्तिक्तकन्दकः । पत्रकन्दा हरिद्रा च तापसो ज्वलनी 'धने' ॥ ७८ ॥ सुगन्धचन्द्रा सौम्या च तथैव सोमसंभवा । काष्ठपलाशिका चैव तथा च सुग्रहांतिका ॥ ७९ ॥ 'कैयदेवनिघण्टे' तु प्रोक्ता वैद्यविशारदैः ।

गुणाः—गन्धपत्रा कटुः स्वादुस्तीक्ष्णोष्णा कफवातजित् ॥८०॥ कासछर्दिज्वरघ्नी च पित्तला 'नृपनामके' । शूलहिध्माश्वासहरा 'धन्वन्तरिनिघंटके' ॥ ८१ ॥ मुखरुग्गुल्महृत् प्रोक्ता 'द्रव्यरत्नाकरे' ध्रुवं । ग्रहापहेति संप्रोक्ता वैद्यै 'र्भावप्रकाशके ॥

## ७३ अहिफेन-अफीम ।

नामानि—अफेनं खर-खस्खसो निफेनं चाहिफेनकं ॥ ८२ ॥ नागफेनं तथा प्रोक्तं 'राजनामनिघण्टके' । अफूकं च रसोद्भूतं प्रोक्तं 'मदनपालके' ॥ ८३ ॥ तथा खसफलक्षीरं प्रोक्तं 'भावप्रकाशके' ।

गुणाः—अफेनं सन्निपातघ्नं वृष्यं बल्यं च मोहदं ॥ ८४ ॥ 'नृपे' प्रोक्तं तथा ग्राहि शोषणं श्लेष्महृन्मदे' ।

## ७४ *साखरुंड-बड़ी माई, पडवास ।

नामानि—साखरुंडो ग्रन्थिफलो विकटो वस्त्रभूषणः ॥ ८५ ॥ कुरुंडः कर्बुरफलः सकुरुंडस्तथा 'नृपे' ।

गुणाः—साखेरुंडः कषायश्च रुचिकृद्दीपनः सरः ॥ ८६ ॥ श्लेष्मवातापहारी च वस्त्ररञ्जनको लघुः ।

## ७५ हितावल्ली-हितावली ।

नामानि—हितावल्ली च हृद्धात्री कुष्ठघ्नोङ्गारकुष्ठकः ॥ ८७ ॥ अंगारग्रन्थिको ग्रन्थी ग्रन्थिलो 'राजनामके'

गुणाः—हितावल्ली रसे तिक्ता प्लीहगुल्मोदरापहा ॥ ८८ ॥ कृमिकुष्ठगुदात्युग्रखर्जूकण्डूसुहारिणी ।

## ७६ हस्तिमद ।

नामानि—हस्तिमदो गजमदो गजदानं मदस्तथा ॥ ८९ ॥ कुम्भिमदो दन्तिमदो दानं द्वीपिमदो 'नृपे' ।

---

*शमीके वृक्ष पर जो छोटी छोटी गाँठें पड़ जाती हैं उन्हें साखरुण्ड अथवा माई कहते हैं ।

गुणाः—स्निग्धो हस्तिमदस्तिक्तः केश्योऽपस्मारनाशनः॥६०॥ विषहृत्कुष्ठकण्डूतिव्रणदद्रुविसर्पनुत्।

## ७७ मायाफल-माजूफल।

नामानि—मायाफलं मायिफलं छिद्राफलं च मायिका ॥६२॥ तथा मायि च सम्प्रोक्त 'राजनामनिघण्टके'।

गुणाः—अथ मायाफलं प्रोक्त कटूष्णं वातनाशनं ॥ ६३ ॥ योनिसंकोचकृच्चैव केशकृष्णीकरं नृपे'।

# लवणवर्गः।

## सैन्धव-सेधानमक।

नामानि—सैंधव स्याच्छातशिवं नादेयं सिंधुजं शिवं। शुद्ध शिवात्मजं पथ्यं माणिमंथं तु 'राजके' ॥ ६४ ॥ सिन्धुत्थं स्वादु शीतं च मणिमन्थं च 'धन्वके'। सिन्धु स्याद्विमलं चैव लवणं तु शिलात्मकं ॥ ६५ ॥ पटूत्तमं धौतयं तु वरे स्यात् शुभ्रनामकं। 'केयदेवनिघण्टे' तु संप्रोक्तं वैद्यनायकैः ॥ ६६ ॥

गुणाः—सैंधवं तु भवेद् वृष्यं चक्षुष्यं रुचिकारकं। दीपनं च त्रिदोषघ्नंव्रणदोषविन्धहृत् ॥ ६७ ॥ 'राजनामनिघण्टे' च संप्रोक्तं वैद्यनायकैः। हृद्यं शूलहरं स्निग्धं प्रोक्तं 'केयनिघण्टके' ॥ ६८ ॥ घांतिदं तु 'गणे' प्रोक्तं पुरातनचिकित्सकैः।

## २ सौवर्चल-कालानोन।

नामानि—सौवर्चलं तु रुचकं तिलकं हृद्यगंधकं ॥ ६६ ॥ अक्षं च कृष्णलवणं रुच्यं कोद्रविकं तथा। प्रोक्तं 'राजनिघण्टे' तु पुरातनचिकित्सकैः ॥ ५०० ॥ तत्काललवणं चैव प्रोक्तं 'धन्वन्तरौ' ध्रुवं। सुगंधि रुचकं चैव मागधं हृद्यसैंधवं ॥ १ ॥ तिलकं मेचकं मेध्यं लवणं कृष्णनामकं। जरणं चुतगंधं च 'केयदेवे' प्रकीर्तितं ॥ २ ॥ तथा 'मदनपाले' तु सुगंधाख्यं स्मृतं बुधैः। पाक्यं 'भावप्रकाशे' च भिषग्भिः परिकीर्तितं ॥ ३ ॥ सुगन्धं काललवणं मगधं कृष्णसंज्ञकं। प्रोक्तं 'गणनिघण्टे' तु पंचविशंतिसंख्यकं ॥ ४ ॥

गुणाः—सोवर्चलं लघु क्षारं कटूष्णं वातगुलमहृत्। ऊर्ध्ववातामशूलघ्नं विबंधारुचिहृत् 'नृपे' ॥ ५ ॥ अर्शोदरहरं प्रोक्तं 'द्रव्य-

रत्नाकरे' ध्रुवं । उद्गारशुद्धिदं प्रोक्तं 'मदने' कविनायकैः ॥ ६ ॥ दीपनं शूलहृद्रोगकफहृद्रोचनं तथा । वातानुलोमनं चैव 'धन्वन्तरिनिघंटके' ॥ ७ ॥ ऊर्ध्वाधःकफवातानुलोमनं च विबन्धहृत् । आनाहशूलविष्ठंभनाशनं केयदेवके' ॥ ८ ॥ पित्तलं विशदं चैव लघुं । 'भावप्रकाशके' ।

## ३ काचलवण-वांगडखार ।

नामानि—नीलं काचोद्भवं काचं तिलकं काचसंभवं ॥ ९ ॥ काचसौवर्चलं कृष्णलवणं पाक्यजं तथा । काचोत्थं हृद्यगन्धं च तत्काललवणं तथा । ॥ १० ॥ कुरुविंदं काचमलं कृत्रिमं 'राजनामके' । पाक्यं चैव त्रिकूटं च काचकं लवणं पटु ॥ ११ ॥ तथा 'मदनपाले' तु पाक्याव्ह कथितं बुधैः ।

गुणाः—ततस्तु काचलवणं रुच्यं पित्तलदाहदं ॥१२॥ कफवातहरं चैव दीपनं गुल्मशूलहृत् । 'नृपे' च पूर्वमुक्तं स्याद्रक्तपित्तहरं 'द्रवे' ॥ १३ ॥ अत्युणं 'मदने' प्रोक्तं वैद्यविद्याविशारदैः ।

## ४ विडलवण ।

नामानि—विडं द्राविडकं खण्डं कृतकं क्षारमेवच ॥ १४ ॥ आसुरं तु सुपाक्यं च धूर्तं खण्डाख्यमेव च । कृत्रिमं लवणं प्रोक्तं 'राजनामनिघण्टके' ॥ १५ ॥ विहंगंकृत्रिमं क्षारं द्राविणं तिक्तमेव च । 'धन्वन्तरिनिघण्टे' तु प्रोक्तं वैद्यविचक्षणैः ॥ १६ ॥ विड्गन्धं पाक्यसंज्ञं च घण्टिकालवणं तथा । द्राविडं 'केयदेवे' तु संप्रोक्तं भिषजांवरैः ॥ १७ ॥ ततस्तु बीडलवणमुष्ण दीपनमेव च । रुच्यं ह्यजीर्णशूलघ्नं गुल्ममेहहरं 'नृपे' ॥ १८ ॥ गणे' गौरवहृत्प्रोक्तं पुरातनचिकित्सकैः । हृद्रोगकफहृत्तीक्ष्णं धन्वे' वातानुलोमनं ॥ १९ ॥ ऊर्ध्वाधःकफवातानुलोमनं रूक्षमेव च । लघु व्यवायि संप्रोक्तं विबन्धानाहहृत्तथा ॥ २० ॥ विष्टंभहृद्रोगहरं 'केये' प्रोक्तं भिषग्वरैः ।

## ५ सांभर-साभरनोन ।

नामानि—गाढादिलवणं शुभ्रं पृथ्वीजं गडदेशजं ॥ २१ ॥ गडोत्थं च महारम्भं सांभरं सम्भरोद्भवम् । प्रोक्त 'राजनिघण्टे'

तु पुरातनभिषग्वरैः ॥ २२ ॥ शाकम्भरीयं गण्डाख्यं रोमकं 'भाव-नामके'। प्रोक्तं द्वादशसंख्याकं भिषग्विद्याविशारदैः ॥ २३ ॥

गुणाः—गाढादिलवणं तूष्णमीषदम्लमलापहं । दीपनं कफ-वातघ्नमर्मकोष्ठविशोधनं ॥ २४ ॥ 'राजनामनिघण्टे' च संप्रोक्तं वैद्यनायकैः ।

## ६ समुद्रलवण-समुद्रनोन ।

नामानि—सामुद्रकं तु सामुद्रं समुद्रलवणं शिवं ॥ २५ ॥ वं-शिरं सागरोत्थं च त्वक्षिवं लवणाब्धिजं । प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ २६ ॥ सागरजं तु चाक्षीवं स्यात्क्षारोदधिसं-भवम् । 'धन्वन्तरिनिघण्टे' तु लवणं परिकीर्तितं ॥ २७ ॥ ततः सागरकं चैव त्रिकूटोदधिजातकं । वारिसम्भवसंज्ञं च 'कैयदेव-निघण्टके' ॥ २८ ॥ आसुरं वारिसम्भूतं प्रोक्तं 'मदनपालके' ।

गुणाः—सामुद्रं लघु हृद्यं च पलितास्रदपित्तदं ॥ २९ ॥ वि-दाहि कफवातघ्नं दीपनं रुचिदं 'नृपे' । 'कैये' पाके तु मधुरं वातघ्नं श्लेष्मलं तथा ॥ ३० ॥ 'भावप्रकाशे' । संप्रोक्तं गुरु नात्यंतशी-तलं । पाके नात्युष्णमित्युक्तं भेदनं ह्यविदाहि च ॥ ३१ ॥ स्निग्धं शूलहरं चैव 'धन्वे' स्यान्नातिपित्तलं । कफवातहरं 'द्रव्ये' 'मदने' वातकृत्तथा ॥ ३२ ॥

## ७ द्रोणेय-द्रोणीलवण, वर्तनका नमक ।

नामानि—द्रोणेयं द्रोणिजं द्रौणं त्रिकूटलवणं तथा । वार्धिजं द्रोणिजं चैव वार्धेयं 'राजनामके' ॥ ३३ ॥

गुणाः—द्रोणेयं तु 'नृपे' प्रोक्तं नात्युष्णमविदाहि च । भेदनं स्निग्धमीषच्च शूलघ्नं चाल्पपित्तलं ॥ ३४ ॥

## ८ औखर-मृत्तिकालवण, खारीमीठ ।*

नामानि—औखरकं सार्वगुणं सांभारं मिश्रकं तथा । सार्व-रसमूखरजं मेलकं सर्व लोणकं ॥ ३५ ॥ तथा च बहुलवणं प्रोक्तं 'राजनिघंटके' । पांशुजं पांशुक्षारं च शिवं संसर्गलक्षणं ॥ ३६ ॥ संसर्गं तु उषाक्षारं 'कैयदेवनिघंटके' । औरिणं चौर्वसंज्ञं च पांशु-सम्भवमेव च ॥ ३७ ॥ पांशवं वसुसंज्ञं च 'मदने' परिकीर्तितं ।

गुणाः—औखरं तु कटु क्षारं तिक्तं वातकफापहं ॥ ३८ ॥ वि-

*खारानोन खारी मिट्टीसे क्षारकी विधिसे निकाला जाता है ।

दाहि पित्तकृद्ग्राहि मूत्रशोषकरी 'नृपे' । कटु पाके व्यवायी च 'धन्वन्तरिनिघंटके' ॥ ३६ ॥ 'द्रव्ये' तु रक्तशूलघ्नं तद्वद्वातानुलोमनं । वैद्यै 'र्भावप्रकाशे' च प्रोक्तं वातविनाशनं ॥ ४० ॥

## ९ रोमक-सोरा ।

नामानि—औद्भिदं रोमकं चाथ वसुकं वसु पांशु च । औखरं पांसवं चैवमैरिणं तदनन्तरं ॥ ४१ ॥ ऊखरजं सार्वसहं प्रोक्तं 'राजनिघण्टके' । उद्भिदं पांशुलवणमुखरं पांशुक्षारकं ॥ ४२ ॥ औद्यं सार्वगुणं प्रोक्तं 'धन्वन्तरिनिघंटके' । बस्तगन्धं रोम्यलोणं 'कैयदेवनिघण्टके' ॥ ४३ ॥ पार्थिवं भूमिजं भौमं पृथ्विवीभवमेव च । प्रोक्तं 'मदनपाले' तु भूमिपत्रं 'गणे' स्मृतं ॥ ४४ ॥

गुणाः—रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनं । दाहशोषकरं ग्राहि पित्तकोपकरं 'नृपे' ॥ ४५ ॥

## १० समुद्रफेन ।

नामानि—समुद्रफेनं फेनश्च वाधिफेनं पयोधिजम् । सुफेनमब्धिडिण्डीरं सामुद्रं 'राजनामके' ॥ ४६ ॥ शुष्कफेनोदधिफेनं तद्वत्सागरजं मलम् । 'धन्वन्तरिनिघण्टे' तु प्रोक्तं वैद्यविचक्षणैः ॥ ४७ ॥ दिण्डिरोऽब्धिकफश्चैव तथा वारिकफोऽब्धिजः । शुष्कोऽशुष्कस्तोयमलो चाब्धिफेनस्तु 'कैयके' ॥ ४८ ॥ फेनोर्णवमलश्चैव 'द्रव्यरत्ने' प्रकीर्तितः ।

गुणाः—समुद्रफेनं शिशिरं कषायं नेत्ररोगनुत् ॥ ४६ ॥ कफकण्ठामयघ्नं च रुचिकृत्कर्णरोगहृत् । 'नृपे' प्रोक्तं तथा 'धन्वे' चक्षुष्यं लेखनं हिमम् ॥ १ ॥

## ११ टंकण-टांकणखार, सोहागा ।

नामनि—टंकणष्टंकणक्षारो रङ्गक्षारो रसाधिकः ॥ ५० ॥ लोहद्रावी रसघ्नश्च सुभगो रङ्गदस्तथा । वर्तुलं कणकक्षारं मलिनं धातुवल्लभम् ॥५१॥ प्रोक्तं 'राजनिघण्टे' तु भिषक्शास्त्रज्ञपंडितैः । मालतीरससम्भूतो द्रावी द्रावणकस्तथा ॥५२॥ लोहशुद्धिकरश्चैव 'धन्वन्तरिनिघण्टके' । स्वर्णपाकस्तथा प्रोक्तो 'कैयदेवनिघण्टके' ॥५३॥ सौभाग्यं धातुद्रवकं प्रोक्तम् 'भावप्रकाशके' । तथा 'त्वमरकोशे' तु रसयोनिः प्रकीर्तितः ॥५४॥ द्वाविंतिसंख्यकेति भिषग्भिः परिकीर्तितः ।

गुणाः—टंकणं तु कटूष्णं च कफनाशनमेव च ॥ ५५ ॥ स्था-वरादि विषघ्नं च कासश्वासहरम् 'नृपे'। दीपनोनिलवांतिघ्नो रूक्षः 'कैयनिघण्टके' ॥ ५६ ॥ 'द्रव्यरत्ने' ज्वरघ्नं च 'मदने' वात-पित्तकृत् ।

## १२ श्वेतटंकण—सफेदसोहागा।

नामानि—श्वेतं तु श्वेतकं चैव श्वेतटंकणमेव च ॥ ५७ ॥ लोहशुद्धिकरम् सिन्धुमालतीतीरसम्भवम्। शिवं च द्रावकं चैव सितक्षारम् तथा 'नृपे' ॥ ५८ ॥

गुणाः—सुश्वेतं टंकणम् स्निग्धम् कटूष्णम् कफवातनुत्। आमक्षयापहृच्छ्वास विषकासमलापहम् ॥ ५९ ॥ प्रोक्तं 'राजनि-घण्टे' तु वैद्यविद्याविशारदैः ।

## १३ स्वर्जिक्षार—सज्जीखार ।

नामानि—स्वर्जिक्षारः स्वर्जिकश्च क्षारस्वर्जी सुखार्जिकः ॥६०॥ सुवर्चिकः सुवर्ची च सुखवर्चा 'नृपे' तथा। सर्जिका सर्जिकाक्षारः सुवर्चश्च सुवर्चिका ॥ ६१ ॥ 'धन्वन्तरिनिघंटे' तु संप्रोक्ता वैद्य-नायकैः। तथा कपोतकोपाख्या 'कैयदेवनिघंटके' ॥६२॥ तथा 'भाव-प्रकाशे' तु कपोतः परिकीर्तितः ।

गुणाः—स्वर्जिकः कटुरूष्णश्च तीक्ष्णो वातकफार्तिनुत् ॥ ६३ ॥ गुल्माध्मानकृमीन्हन्ति व्रणजाठरदोषनुत्। 'नृपे' प्रोक्तो तथा मांद्य-मेदोघ्नो 'धन्वनामके' ॥६४॥ 'द्रव्यरत्नाकरे' चैव शूलहा परिकीर्तितः।

## १४ लवणक्षार—लोनखार ।

नामानि—ततो लवणक्षारं च लवणोत्थम् तथैव च ॥ ६५ ॥ लवणासुरजं चैव लवणभेद एव च। जलजं लवणक्षारं क्षारं लवण-मित्यपि ॥ ६६ ॥ लोणारक्षारसंज्ञं च प्रोक्तं 'राजनिघंटके'।

गुणाः—लोणारक्षारमत्युष्णं तीक्ष्णं पित्तप्रवृद्धिदम् ॥ ६७ ॥ वातगुल्महरम् प्रोक्तम् शूलह 'द्राजनामके'।

## १५ वज्रक्षार-नवसागर ।

नामानि—वज्रकं वज्रकक्षारं क्षारश्रेष्ठं विदारकम् ॥ ६८ ॥ सारं चन्द्रनसारं च धूमोत्थं धूमजांगजम्। प्रोक्तं 'राजनिघण्टे' तु वैद्य-

विद्याविशारदैः ॥ ६९ ॥ इष्टिकादहने जातं पांडुरं लवणं लघु । नवसाराख्यसंज्ञं तु सारं च नवसारकम् ॥ ७० ॥ चुल्लिकालवणं चैव 'धन्वन्तरिनिघण्टके' ।

गुणाः—वज्रकं क्षारमत्युष्णं तीक्ष्णं क्षारं च रेचनम् ॥ ७१ ॥ गुल्मोदरातिविष्टम्भशूलघ्नं च सरं 'नृपे' ।

## १६ यवक्षार-जवाखार ।

नामानि—यवक्षारस्तु पाक्यश्च यवजो यवशूकजः ॥ ७२ ॥ यवशूको यवाह्वश्च यवापत्यं यवाग्रजः । प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रज्ञपण्डितैः ॥ ७३ ॥ शूकजो यावशूकश्च यव्यो 'धन्वनिघंटके' । यवनाजलसंज्ञश्च यावशूकक एव च ॥ ७४ ॥ क्षारपाक्यं तीक्ष्णरसो याव्यो यावहश्च 'कैयके' । तथा 'मदनपाले' तु शूकपाक्यः प्रकीर्तितः ॥ ७५ ॥

गुणाः—यवक्षारः कटूष्णश्च कफवातोदरापहा । आमशूलाश्मरीकृच्छ्रविषघ्नश्च सरो 'नृपे' ॥ ७६ ॥ रूक्षोऽग्निदीपनस्तीक्ष्णो हृद्यो पित्तास्रदूषणः । 'धन्वे' प्रोक्तो तथा 'कैये' अर्शोघ्नो प्लीहगुल्महा ॥ ७८ ॥ गलामयानाहपांडुग्रहणी श्वासहा तथा ।

## १७ सर्वक्षार—साबुन, रेह ।

नामानि—सर्वक्षारो बहुक्षारः समूहक्षारकस्तथा ॥ ७९ ॥ स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः ।

गुणाः—सर्वक्षारो ह्यतिक्षारश्चक्षुष्यो बस्तिशोधनः ॥ ५८० ॥ गुदावर्तकृमिघ्नश्च वस्त्रशुद्धिकरो 'नृपे' ॥१७२९॥

# ५ मूलकादिवर्गः ।

## मूलक—मूली ।

नामानि—मूलकं नीलकण्ठं च मूलाव्हं दीर्घमूलकं ॥ १ ॥ भूक्षारं कन्दमूलं स्याद्धस्तिदन्तं सितं तथा । शङ्खमूलं हरित्पर्णं रुचिरं दीर्घकन्दकं ॥ २ ॥ कुञ्जरक्षारमूलं च प्रोक्तं 'राजनिघण्टके' । नीलकन्दं महाकन्दं मृत्तिकाक्षारमेव च ॥ ३ ॥ रुचिष्यं हरिपर्णं च 'धन्वन्तरिनिघण्टके' । स्वस्तिको हस्तिकन्दश्च नीलपर्णं तथैव च ॥ ४ ॥ बस्तिकाक्षारसंज्ञं च द्रुवदंशक्षमं तथा ।

तीक्ष्णं तु 'कैयदेवे' च भिषग्भिः परिकीर्तितं ॥ ५॥ करिदन्तीभसंज्ञश्च क्षुद्रमूलं च मिश्रकं । 'द्रव्यरत्नाकरे' प्रोक्तं भिषग्विद्याविशारदैः ॥ ५ ॥ दन्तोज्वलं तु विदितं तथा मूलकपोतिका । प्रोक्ता 'मदनपाले' तु वैद्यशास्त्रज्ञपण्डितैः ॥ ७ ॥ 'भावप्रकाशे' संप्रोक्तं मिश्रं शालेयकं तथा । तथा 'गणनिघंटे' तु मृत्तिकाक्षारसेवित ॥ ८ ॥ ततो व्यक्तिरसं चैव रुचिकं तदनन्तरं । मूलकस्य च संख्याका संप्रोक्ता भिषजांवरैः ॥ ६ ॥

गुणाः—मूलकं तीक्ष्णमुष्णं च कटुग्राही च दीपनं । दुर्नामगुल्महृद्रोगवातघ्नं रुचिदं गुरु ॥ १० ॥ 'राजनामनिघंटे' च सप्रोक्तं वैद्यनायकैः । ज्वरनासारोगहरं कण्ठरोगविनाशनं ॥ ११ ॥ स्नेहसिद्धं त्रिदोषघ्नं प्रोक्तं 'भावप्रकाशके' । भोजनात्प्राक् पित्तलं च दाहकारि प्रकीर्तितं ॥ १२ ॥ आमत्रिदोषहृत् स्निग्धं विष्टंभी कफवातहृत् । प्रोक्तं 'धन्वनिघंटे' च वैद्यविद्याविशारदैः ॥ १३ ॥ स्वर्यं हृद्यं दन्तशूलनाशनं कोष्ठशुद्धिदं । उदावर्तं पीनसाख्य कासयुक्तक्षयं तथा ॥१४॥ श्वासं व्रणं नेत्ररोगं हन्त्यतः 'कैयदेवके' । तत्रैव रुक्षं दाहीति कीर्तितं वैद्यनायकैः ॥ १५ ॥ शुष्कं शोपहरं चैव दोषत्रयविनाशनं । तत्पुष्पं कफपित्तघ्नं फलं वातकफापहं ॥ १६ ॥

## २ चाणाक्यमूलक–बड़ी मूली ।

नामानि—चाणाख्यमूलजं चान्यच्छालेयं विष्णुगुप्तकं । स्थूलमूलं महाकन्दं कौटिल्यं मरुसम्भवं ॥ १७ ॥ शालामर्कटकं मिश्रं प्रोक्तं 'राजनिघंटके' । शालाकर्कटकं चैव 'धन्वन्तरिनिघण्टके' ॥ १८ ॥ कपोतिका बालमूलं 'कैयदेवनिघंटके' । गजदन्तसमानं च तथा नेपालमूलकं ॥ १६ ॥ 'भावप्रकाशे' संप्रोक्ता तथा मूलकपोतिका ।

गुणाः—चाणाक्यमूलकं ग्राहिकटु रुच्यं च दीपनं ॥ २० ॥ गुरूष्णं कफवातघ्नं कृमिगुल्महरं 'नृपे' ।

## ३ गृंजन-लाल मूली ।

नामानि—गृंजनं शिखमूलं च यवनेष्टं च वर्तुलं ॥ २१ ॥ ग्रन्थिमूलं शिखाकन्दं कन्दं डिंडीरमोदकं । प्रोक्तं 'राजनिघण्टे' तु भिषक्विद्याविशारदैः ॥ २२ ॥

गुणाः—गृंजनं कटुकोष्णं च कफवातरुजापहं । रुच्यं च दीपनं हृद्यं दुर्गन्धं गुल्महृन्नपे' ॥ २३ ॥

## ४ पिंडमूलक-गोल मूली, सलगम ।

नामानि—पिंडमूलं गजांडं च पिंडकं पिंडमूलकं ।

गुणाः—पिंडमूलं कटूष्णं च वातगुल्महरं 'नृपे' ॥ २४ ॥

## ५ गार्जर-गाजर ।

नामानि—गार्जरं पिंडमूलं च पीतकं च समूलकं । स्वादुमूलं सुपीतं च नारङ्गं पीत मूलकम् ॥ २५ ॥ प्रोक्तं 'राजनिघंटे' तु वैद्यशास्त्रज्ञपण्डितैः । गर्जरं पिंगलं मूलं पिङ्गमूलम् च मूलकं ॥ २६ ॥ पीतकन्दं गृञ्जरं च 'धन्वन्तरिनिघंटके' । तथा 'मदनपाले' तु प्रोक्तो नारंगवर्णकः ॥ २७ ॥

गुणाः—गर्जरं मधुरं रुच्यं किञ्चित्कटु कफापहम् । आध्मानक्रमिशूलघ्नं दाहपित्ततृषापहं ॥२८॥ प्रोक्तं 'राजनिघण्टे' तु वैद्यशास्त्रज्ञपण्डितैः । पाके तु तीक्ष्णमुष्णं च विदाही दीपनं तथा ॥२९॥ हृद्यं ग्राही तु रूक्षं च रक्तपित्तविनाशनम् । नेत्ररोगार्शोग्रहणीवातश्लेष्मक्रिमीहरम् ॥ ३० ॥ शुक्रदं रुचिकृत्प्रोक्तं वैद्यैः 'कैयनिघण्टके' । 'द्रव्यरत्ने' शीतलं च रक्तार्शोहन्ति 'मादने' ॥ ३१ ॥

## ६ शिग्रू-सहँजन ।

नामानि—शिग्रुर्हरितशाकश्च शाकपत्रः सुपत्रकः । उपदंशक्षमश्चैव दंशः कोमलपत्रकः ॥ ३२ ॥ बहुमूला दंशमूलस्तीक्ष्णमूलो 'नृपे' तथा । शिग्रुको लघुपत्रश्चह्यवदंशक्षमस्तथा ॥ ३३ ॥ ततो मूलकपर्णीति प्रोक्ता 'धन्वन्तरौ' भुवं । 'कैयदेवनिघण्टे' तु प्रोक्तो हरितसारकः ॥३४॥ चाक्षीवो मोचकः प्रोक्तो 'त्वमरे' तीक्ष्णगन्धकः ।

गुणाः—शिग्रुश्च कटुतिक्तोष्णस्तीक्ष्णो वातकफापहः ॥ ३५ ॥ मुखजाड्यहरो रुच्यो व्रणघ्नो दीपनो 'नृपे' । समीरक्रिमिप्लीहघ्नो विद्रधीविषनाशनः ॥ ३६ ॥ आमगुल्महरः प्रोक्तो 'धन्वन्तरिनिघण्टके' । पाके कटुस्तु रूक्षश्च संग्राही शुक्रलस्तथा ॥ ३७ ॥ हृद्यं च रक्तपित्ताढ्यं चक्षुष्यं कफवातजित् । शोथघ्नो मेदहश्चैव गण्डापचिविनाशनः ॥ ३८ ॥ तत्पुष्पं गुरुग्राहीति कषायं वातकोपनम् ।

तद्बीजं तु भवेत्तीक्ष्णं चक्षुष्यं चोष्णमेव वा ॥३६॥ मधुरं भिषजां नाथैः 'कैयदेवे' प्रकीर्तितम् । 'द्रव्ये' तूदरनिघ्नं च वैद्यैः प्रोक्तं न संशयः ॥ ४० ॥ तत्फलं कफपित्तघ्नं शूलकुष्ठक्षयापहम् । श्वासघ्नं कविभिः प्रोक्तम् 'भावनामनिघण्टके' ॥ ४१ ॥

## ७ शोभांजन-कालासहिंजन ।

नामानि—शोभांजनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः । मुखामोदः कृष्णशिग्रुश्चक्षुष्यो रुचिरञ्जनः ॥४२॥ प्रोक्तो 'राजनिघण्टे' तु वैद्यविद्याविशारदैः । मुखभङ्गः शिग्रुकश्च 'धन्वन्तरिनिघण्टके' ॥४३॥ कृष्णगन्धो सुरङ्गो च शालनस्तु क्षमोधनः । छदस्तु 'कैयदेवे' च संप्रोक्तो भिषजांवरैः ॥४४॥ अवदंशो मोचकश्च तथैव बहलच्छदः । मुखभृङ्गो मूलपर्णी ततो हलच्छदा मता ॥ ४५ ॥ काक्षीवो विद्रधिघ्नश्च तथैव मूलकच्छदा ।

गुणाः—शोभांजनस्तीक्ष्णकटुःस्वादूष्णः पिच्छलस्तथा ॥ ४६ ॥ जन्तुवातार्तिशूलघ्नश्चक्षुष्यो रोचनो 'नृपे' ।

## ८ श्वेतशिग्रु—सफेदसहिंजन ।

श्वेतशिग्रुस्तथा तीक्ष्णो मुखभङ्गः सिताऽह्वयः ॥४७॥ सुमूलः श्वेतमरिचो रोचनः शिग्रुकस्तथा । प्रोक्तो 'राजनिघण्टे' च श्वेतको 'धन्वनामके' ॥ ४८ ॥ 'द्रव्यरत्नाकरे' चैवप्रोक्तः सितच्छदस्तथा । दिक्संख्या च सदा प्रोक्ता पुरातनचिकित्सकैः ॥ ४९ ॥

गुणाः—शोफानिलहरो रूच्यो दीपनो मुखजाड्यहा । तथैव कटुतीक्ष्णश्च चोष्णस्त्वंगव्यथाहरः ॥ ५० ॥ श्वेतस्तु शिग्रुकः प्रोक्तो 'नृपनामनिघण्टके'

## ९ रक्तशिग्रु—लालसहिंजन ।

नामानि—रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः ॥ ५१ ॥ सुगन्धकेसरः सिंहो मृगारिश्च 'नृपे' तथा । 'धन्वन्तरिनिघण्टे' तु संप्रोक्तो मधुशिग्रुकः ॥५२॥ रक्तान्यः शिग्रुकश्चैव तथैव मधुगृञ्जनः । स्वादुगन्धिर्गृञ्जनकः शिग्रुकः 'कैयदेवके' ॥ ५३ ॥ पञ्चभूसंख्यका प्रोक्ता भिषक्शास्त्रपरायणैः ।

गुणाः—रक्तशिग्रुर्महावीर्यो मधुरश्च रसायनः ॥ ५४ ॥ शोफाध्मानसमीरार्तिपित्तश्लेष्मघ्नको 'नृपे' । शिग्रुपत्रम् भवेद्रुच्यं कटूष्णं

कफवातहम् ॥ ५५ ॥ दीपनं च तथापथ्यं कृमिघ्नं पाचनम् 'धने' ।

## १० वंश-बांस ।

नामानि—वंशो यवफलो वेणुः कर्मारस्तृण केतुकः ॥ ५६ ॥ मस्करःशतपर्वा च कंटालुः कंटकी तथा। महाबलो दृढग्रन्थिर्दण्डपत्रो धनुर्द्रुमः। धनुष्यो वेणु दृढकांडश्च प्रोक्तो 'राजनिघण्टके' ॥५७॥ कामुकस्तृणकेतुश्च 'धन्वन्तरिनिघण्टके'। वंशी सुपर्वा विख्याता तथैव षट्पदालया ।५८। तृणध्वजः शब्दमाल स्त्वचिसारश्च 'कैयके' तथा 'भावप्रकाशे' तु तेजनः परिकीर्तितः ॥५९॥ बहुपर्वकः संप्रोक्तो 'गणनामनिघण्टके'। पञ्चविंशतिसंख्याका संप्रोक्ता भिषजांवरैः ॥६०॥

गुणाः—वंशोम्लस्तु कषायश्च किंचित्तिक्तश्च शीतलः । मूत्रकृच्छ्र प्रमेहार्शःपित्तदाहास्रनाशनः ॥ ६१ ॥ प्रोक्तो 'राजनिघण्टे' तु पुरातनचिकित्सकैः ।

## ११ रंध्रवंश-पोला बांस ।

नामानि—रंध्रवंशस्तु त्वक्सारः कीचकाव्हश्च मस्करः ॥६२॥ वादनीयः सुषिराख्यः प्रोक्तो 'राजनिघण्टके'। 'द्रव्यरत्नाकरे' चैव कुरकश्च करीरकः ॥ ६३ ॥ अत्रसंख्येति संप्रोक्ता पुरातनचिकित्सकैः ।

गुणाः—विशेषो रंध्रवंशस्तु दीपनोऽजीर्णनाशनः ॥६४॥ रुचिकृत्पाचनोहृद्यो गुल्मघ्नो शूलनाशनः । प्रोक्तो 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ ६५ ॥

## १२ वंशाकुर-अंकुर ।

नामानि—वंशाग्रं तु करीरश्च तथा यवफलांकुरः । वंशांकुरश्च संप्रोक्तो 'राजनामनिघण्टके' ॥ ६६ ॥

## १३ वंशग्रंथि-बांसकी गांठ ।

नामानि—वंशग्रंथिः परुः पर्वः कांडसंधिश्च 'राजके'।

गुणाः—करीरं कटु तिक्ताम्लं कषायं लघु शीतलं ॥ ६७॥ पित्तास्रदाहकृच्छ्घ्नं रुचिकृत्पर्व निर्गुणं । 'राजनामनिघंटे' तु प्रोक्तं वैद्यविशारदैः ॥ ६८॥ वस्तिशोधनकश्चैव भेदनः कफहारकः । पित्ता-

सृक्कुष्ठशोफघ्नो व्रणनाशनमेव च ॥ ६९ ॥ बहुमूत्रकफघ्नश्च प्रोक्तो 'कैयनिघण्टके' ।

## १४ वेत्र-बड़ा वेत ।

नामानि—वेत्रो वेतो योगिदण्डः सुदण्डो मृदुपर्वकः ॥ ७० ॥
गुणाः—वेत्रः पञ्चविधः शैत्यकषायो भूतपित्तहृत् ॥ ७१ ॥
प्रोक्तो 'राजनिघण्टे' तु 'धन्वे' पुत्रविनाशनः ।

## १५ माकन्दी-मायमूल ।

नामानि—माकन्दी बहुमूला च मादनी गन्धमूलिका ॥ ७२ ॥
एका विशदमूली च श्यामला चापरा 'नृपे' ।
गुणाः—माकन्दी कटुका तिक्ता मधुरा दीपनी परा ॥ ७३ ॥
रुच्याऽल्पवातुला पथ्या न वर्षासु हिता 'नृपे' ।

## १६ शोली-बनहल्दी, सोली ।*

नामानि—शोली वनहरिद्रा च वनारिष्टा च शोलिका ॥ ७४ ॥
गुणाः—शोलिका कटु गौल्या च रुच्या तिक्ता च दीपनी ।
प्रोक्ता 'राजनिघण्टे' तु पुरातनचिकित्सकैः ॥ ७५ ॥

## १७ शृङ्गाटक-सिंघाड़ा

नामानि—शृङ्गाटकः शृङ्गरुहो जलवल्ली जलाश्रया । शृङ्गकन्दः शृङ्गमूलो विषाणी 'राजनामके' ॥ ७६ ॥ शृङ्गाह्वः सप्तनाडीकः संप्रोक्तो 'धन्वनामके' । जलकण्टस्त्रिकोणश्च त्रिकंटस्त्रिक एव च ॥ ७७ ॥ कसेरुकं 'कैयदेवे' भिषग्भिः परिकीर्तितः । 'भावप्रकाशे' संप्रोक्तं त्रिकोणफलमित्यपि ॥ ७८ ॥ तथा जलफलं प्रोक्तं भिष-

---

* सोलहल्दीका पेड़ दक्खिनी हल्दीके समान होता है और उसमें एक सीधी डण्ठी निकलती और उसके दोनों ओर पतरे के समान तीन अंगुल चौड़े और मुण्डे हाथ भर लम्बे पत्ते निकलते हैं। इस वृक्ष पर एक साधारण आमके बराबर एक कली निकलती है और उसमें खांचे रहते हैं उनमें से एक एक फूल फूलता है। एक फूलकी डण्ठी चार अंगुल लम्बी रहती और फूल भी लम्बाई लिये रहता है। फूलका रङ्ग सुनहरी रहता है। इसमें अच्छी सुगन्धि आती है। इसका गीला वृक्ष सूख जाय तौ भी उसमें से मधुर सुगन्धि आती रहती है। इसकी कन्द, गांठ, बद, गलगण्ड, गण्डमाला आदिमें पानीसे घिस कर लगायी जाती है।

विद्याविशारदैः । 'द्रव्यरत्नाकरे' चैव त्वंबुकन्द प्रकीर्तितः ॥ ७९ ॥

गुणाः—शृङ्गाटकस्तु संप्रोक्तो रक्तपित्तहरः सरः । लघुर्वृष्य-स्त्रिदोषघ्नः पित्तभ्रमविनाशनः ॥ ८० ॥ शोषहा रुचिदश्चैव मेहनो 'राजनामके' । त्रिदोषज्वरनिघ्नश्च प्रोक्तो वैद्यविशारदैः ॥ ८१ ॥

## १८ भृङ्गाव्हा-भ्रमरछली ।*

नामानि—भृङ्गाव्हा भ्रमरच्छल्ली भ्रमरा भृङ्गमूलिका । भृङ्ग-च्छल्ली तु कविभिः संप्रोक्ता 'राजनामके' ॥ ८२ ॥ ततो भ्रमरवल्ली तु 'धन्वन्तरिनिघण्टके' । उग्रगन्धा छदः क्षारद्रुमाव्हो भ्रमरत्वचा ॥ ८३ ॥ भ्रमरश्चैव विज्ञेयो 'द्रव्यरत्ननिघण्टके' ।

गुणाः—भृङ्गव्हा तु कटूष्णा च तिक्ता दीपनरोचनी ॥ ८४ ॥

## १९ पेऊ-बनअदरख ।

नामानि—पेऊ वनार्द्रका प्रोक्ता वनजाऽरण्यजाऽऽर्द्रका । प्रोक्ता 'राजनिघण्टे' तु पञ्चसंख्या भिषग्जनैः ॥ ८५ ॥

गुणाः—पेऊ तु कटुकाऽम्ला च रुचिकृद्वल्यदीपनी ।

## २० रसून-सफेद लहसुन ।

नामानि—रसोनस्तु लशूनश्च ह्यरिष्टो म्लेच्छकन्दकः ॥ ८६ ॥ महौषधं च भूतघ्नस्तूग्रगन्धश्च 'राजके' । जुगुप्सितोऽम्लकांतश्च रसायनवरो 'गणे' ॥ ८७ ॥

गुणाः—लसुनोम्लरसश्चैव गुरूष्णः कफवातहा । अरुचिक्रिमि-हृद्रोगशोफघ्नश्च रसायनः ॥ ८८ ॥ कटुस्निग्धः पिच्छलश्च बल्यो वृष्यस्तथैव च । भगास्थिसन्धानकरो मेधावी स्वरवर्णकृत् ॥ ८९ ॥ गुरु स्वादुरसस्तीक्ष्णश्चक्षुष्यो 'राजनामके' । 'धन्वे' तु श्वासहा प्रोक्तो 'मदने' रक्तपित्तकृत् ॥ ९० ॥ हिध्मपीनसकासघ्नो 'गणे' प्रोक्तो भिषग्जनैः ।

## २१ महाकन्द-लाल लहसुन ।

नामानि—महाकन्दो गृञ्जनश्च दीर्घपत्रः पृथुच्छदः ॥ ९१ ॥

---

* भवंर छाली का वृक्ष बड़ा होता है । इसके पत्ते बादामके पत्तेके समान होते हैं । इसकी लकड़ी बहुत अच्छी होती है । इसकी फली बहुत ही पतली होती है । इसकी लकड़ीका रङ्ग सफेद होता है । इस लकड़ीसे तलवारकी म्यानें बहुत अच्छी बनती हैं ।

यवनेष्ठः स्थूलकन्दस्तथैव च विलोहितः । सप्तसंख्या भिषक्श्रेष्ठैः संप्रोक्ता 'राजनामके' ॥ ९२ ॥

गुणाः—गृञ्जनस्य मधुरं कटु कन्दं नालमप्युपदिशन्ति कषायं । पत्रसञ्चयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥ ९३ ॥ हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकृच्छ्रशोफान् । दुर्नाम-कुष्ठानिलसादजंतुकफामयान्हन्ति महारसोनः ॥ ९४ ॥

## २२ पलांडु-सफेद प्याज ।

नामानि—पलाण्डुस्तीक्ष्णकंदश्च उल्ली च मुखदूषणः । शूद्र-प्रियः कृमिघ्नश्च दीपनो मुखगन्धकः ॥ ९५ ॥ बहुपत्रो विश्वगन्धो रोचनो 'राजनामके' । यवनेष्टः सुकन्दश्च 'धन्वन्तरिनिघण्टके' ॥ ॥ ९६ ॥ तथा 'मदनपाले' तु दुर्गन्धः परिकीर्तितः । दुर्बलास्यस्तथा प्रोक्तो 'गणनामनिघण्टके' ॥ ९७ ॥ हरितोऽन्यः पलाण्डुश्च लतार्को दुद्रुमो 'धने' । हारिद्रोऽन्यस्तथा प्रोक्तो 'राजनामनिघंटके', ॥ ९८ ॥

गुणाः—पलांडुः कटुको बल्यः कफपित्तहरो गुरुः । वृष्यश्च रोचनः स्निग्धो वातिहृ 'द्राजनामके' ॥ ९९ ॥ 'मदने' वीर्यकृत्प्रोक्तं 'भावे' लशुनसाम्यकः । कफकृत्तत्र संप्रोक्तो वैद्यविद्याविचक्षणैः ॥ १०० ॥ गुरुर्वातास्रपित्तघ्नो मधुरो कृमिनाशनः । अन्यः क्षीरपलां-डुश्च वृष्यो मधुरपिच्छलः ॥ १ ॥ प्रोक्तो 'धन्वनिघण्टे' तु तद्बीजं वातलं स्मृतं । कीटघ्नं शीतलं 'द्रव्ये' वृष्यं मोहकरं तथा ॥ २ ॥ वातार्शोघ्नं कफघ्नं च प्रोक्तं 'गणनिघण्टके' ।

## २३ राजपलांडु-लालप्याज ।

नामानि—ततो राजपलांडुश्च यवनेष्टो नृपाह्वयः ॥३॥ राजप्रियो महाकन्दो दीर्घपत्रश्च रोचकः । नृपेष्टो नृपकन्दश्च रक्तकन्दो 'नृप' प्रियः ॥ ४ ॥ राजेष्टश्च तथा प्रोक्तो 'राजनामनिघण्टके' ।

गुणाः—पलांडुर्नृपपूर्वश्च शिशिरः पित्तनाशनः ॥ ५ ॥ कफ-हृद्दीपनश्चैव बहुनिद्राकरो 'नृपे' ।

## २४ सूरण-जमींकन्द ।

नामानि—कंडुलः सूरणः कन्दो सुकन्दो स्थूलकन्दकः ॥१०६॥ दुर्नामारिः सुव्रतश्च वातारिः कन्दसूरणः । अर्शोघ्नस्तीव्रकन्दश्च

कन्दार्हः कन्दवर्धनः ॥७॥ बहुकन्दो रुच्यकन्दः सुरकन्दस्तथा 'नृपे'। सुरेन्द्रको वज्रकन्दो चित्रकन्दस्तु 'कैयके' ॥ ८ ॥ गुदजघ्नस्तु कन्दश्च कन्दाली कन्दकस्तथा । 'द्रव्यरत्नाकरे' चैव प्रोक्तो वैद्यविशारदैः ॥ ९ ॥ गुदामयहरश्चैव कुंदलो 'मदने' स्मृतः ।

गुणाः—सूरणः कटु रुच्यश्च दीपनः कृमिनाशनः ॥ १० ॥ कफवातश्वासकासवमनार्शोहरस्तथा । शूलगुल्महरश्चैव रक्तदोषहरो 'नृपे' ॥ ११ ॥ आमदोषहरश्चैव पाचनो 'धन्वनामके' । विशदश्चैव रूक्षश्च विष्टंभी च कषायकः ॥ १२ ॥ बलासगुदकीलघ्नः प्रोक्तः 'कैयनिघंटके' । सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते ॥ १३ ॥ दद्रूणां रक्तपित्तीनां कुष्ठिनां न हितो हि सः । कण्डुकृच्च तथा प्रोक्तो 'भावनामनिघण्टके' ॥ १४ ॥

## २५ अरण्यसूरण-ढेही, बनसूरन* ।

नामानि—सितसूरणश्च वन्यश्च वनजोऽरण्यसूरणः । वनकंदः कंडुलश्च 'नृपे' तु श्वेतसूरणः ॥ १५ ॥ उल्लस्तु 'कैयदेवे' च 'द्रव्यरत्नाकरे' तथा । सुरेंद्रकश्चित्रदंडः वज्रकन्दश्च कन्दकः ॥ १६ ॥

---

*वनसूरनका वृक्ष सूरनके ही समान और पत्ते तथा कन्द भी सूरनके ही समान होता है । यह बरसातमें आपही आप उगता है । इसकी १ सूत और २ वज्रमूठ दो जाति होती हैं । सूतमें फूलकी डण्डी निकलने पर उसमें पत्ता निकलता है । परन्तु दूसरी जातिके वज्रमूठ सूरनमें जो डण्डी निकलती है उसमें छोटी पीले रङ्गकी टोंटीके समान नली निकलती है । वह हाथीकी सूंड़के समान सीधी होती है । इसका वृक्ष पुराना होने पर इसमें जो सूरनके समान पत्तोंका छतासा रहता है वह गिर जाता है और उस दण्डीके ऊपरी भागमें मकाई के भुट्टेके समान भुट्टा निकलता है । इसीसे इसे वज्रमूठ कहते हैं । इस भुट्टेमें लम्बे और घने दाने रहते हैं । दाने पकने पर भुट्टा मूंगोंके समान लाल दिखाई पड़ते हैं । कोंकण देशमें वज्रमूठ वृक्षको शेवल्या कहते हैं और इसकी कोमल डण्डीकी वहांवाले भाजी बनाते हैं । सूतकी भी भाजी बनती है । इसके कन्दकी भी तरकारी बनाते हैं । इसमें कनकनाहट और खुजली बहुत होती है । उसे दूर करनेके लिये शाकको कतरकर चावलके धोवनमें पकाते और इमली तथा इमलीकी पत्ती डालकर कनकनाहट दूर करते हैं । फिर तलनेके समय भी इमली और गुड़ डालते हैं । ऐसा करनेसे उसका विषभागभी निकल जाता है । फोड़ा, गलगण्ड, गांठ, कर्णमूल आदिपर इसके कन्दको घिसकर अथवा पीसकर लगानेसे गांठ बैठ जाती है ।

गुणाः—वनस्थः सूरणो रुच्यः कटूष्णः कृमिगुल्महा। शूलहाऽरुचिहृच्चैव प्रोक्तो 'राजनिघंटके' ॥ १७ ॥ 'द्रव्ये' पित्तकरो रूक्षो हृद्यः कफविनाशनः।

## २६ मुखालु-कोनफल, गोराडू।*

नामानि—मुखालुर्मंडपारोहो दीर्घकन्दः सुकन्दकः ॥ १८ ॥ स्थूलकन्दो महाकन्दः स्वादुकन्दस्तु 'राजके'।

गुणाः—मुखालुर्मधुरः शीतः पित्तहा रुचिवातकृत् ॥ १९ ॥ प्रोक्तो 'राजनिघंटे' तु दाहशोषतृषापहा। रक्तदोषहरश्चैव शोफहा 'द्रव्यनामके' ॥ १२० ॥

## २७ पिंडालु-शकरकन्द।†

नामानि—पिंडालुर्ग्रन्थिलः पिंडकंदस्ताम्बूलपत्रकः। कन्दग्रन्थी रोमकन्दो रोमालुर्रोमशस्तथा ॥ २१ ॥ नानाकन्दः पिंडकश्च 'राजनामनिघंटके'।

गुणाः—पिंडालुर्मधुरः शीतो मूत्रकृच्छ्रामयापहः ॥ २२ ॥ दाहशोषप्रमेहघ्नो वृष्यः सतर्पणो गुरुः। 'द्रव्यरत्ने' दुर्जर च संप्रोक्त नैव संशयः ॥ २३ ॥

## २८ रक्तपिंडालु-लाल शकरकन्द।

नामानि—रक्तालु रक्तपिंडालु रक्तपिंडश्च लोहितः। रक्तकन्दो लोहितालुः प्रोक्तो 'राजनिघंटके' ॥ १२४ ॥

---

*गोराडूकी वेलिके पत्ते बंगलापानके समान लम्बे नोकदार होते हैं। इसकी कन्द शकरकन्दके समान लाल और सफेद दो जातिकी होती है। कोंकण गुजरात और खानदेशमें यह अधिक होता है। इस लताकी डण्ठी लगानेसे सालभरमें बड़ी शकरकन्दके समान कन्द निकलता है। इसकी तरकारी अच्छी होती है। इस कन्दका ऊपरी छिलका निकाल कर कन्द टुकड़े टुकड़े कर सुखा रखे और उसका आटा बनाकर लड़कोंको दे तो तीखुर के समान उसका उपयोग होता है। यह कन्द बलदायक और पौष्टिक है। इसकी मुसली, पींड और अरडी नामसे तीन जाति हैं।

†पिण्डालू शकरकन्दके समान एक कन्द है। इसकी वेलिका विस्तार अधिक नहीं होता। इसके पत्ते गोल पानके समान और कोरदार होते हैं। इसमें आलू के समान कन्द निकलती है।

गुणाः—रक्तपिंडालुकः शीतो मधुराम्लः श्रमापहः । पित्तदाहा-पहो वृष्यो गुरुर्बल्यो 'नृपे' तथा ॥ २५ ॥

## २९ कासालु-कसेर ।

नामानि—कासालुः कासकन्दश्च कन्दालुश्चाऽऽलुकस्तथा । आ-लुर्विशालपत्रश्च पत्रालुश्चेति 'राजके' ॥ २६ ॥ कासभेदस्तु कांडा-लुस्त्वलुको 'धन्वनामके' ।

गुणाः—कासालुरुग्रकंडूतिवातश्लेष्मामयापहः ॥ २७ ॥ अरोचक-हरः स्वादुः पथ्यो दीपन 'राजके' ।

## ३० फोंडालु ।

नामानि—फोंडालुर्लोहितालुश्च रक्तपत्रो मृदुच्छदः ॥ २६ ॥

गुणाः—फोंडालुः श्लेष्मवातघ्नः कटूष्णो दीपनो नृपे' ।

## ३१ पानीयालु-पत्ते की अरुई ।

नामानि—पानीयालुर्जलालुः स्यादनूपालुरवालुकः ॥ २६ ॥

गुणाः—पानीयालुस्त्रिदोषघ्नः सन्तर्पणकरो 'नृपे' ।

## ३२ नीलालु-काली अरुई ।

नमानि—नीलालु रसितालुश्च कृष्णालुः श्यामलालुकः ॥३०॥

गुणाः—नीलालुर्मधुरः शीतः श्रमहा दाहहा 'नृपे' ।

## ३३ महिषीकन्द-भैंसाकन्द ।

नामानि—शुभ्रालुर्महिषी कन्दः शुक्लकन्दो लुलायकः ॥ ३१ ॥ सर्पाख्यो वनवासी च विषकन्दस्तदुत्तरम् ॥ नीलकन्दो " राज-नाम्नि' प्रोक्ता वैद्य विशारदैः ॥ ३२ ॥

गुणाः—कटूष्णो महिषीकन्दः कफवातामयापहः । मुखजाडय-हरो रुच्यो महासिद्धिकरः सितः ॥ ३३ ॥

## ३४ हस्तिकन्द-हाथीचिंघारी ।

नामानि—हस्तिकन्दो हस्तिपत्रः स्थूलकन्दोऽतिकन्दकः । वृहत्प-त्रोऽतिपत्रश्च हस्तिकर्णः सुकर्णकः ॥ ३४ ॥ त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः । गजकन्दो नागकन्दो 'राजनामनिघण्टके' ॥ ३५ ॥

गुणाः—हस्तिकन्दः कटूष्णश्च कफवातामयापहः । त्वग्दोषश्च-श्रमहा कुष्ठविषवीसर्पनाशकः ॥ ३६ ॥

## ३५ कोलकन्द-बनप्याज ।

नामानि—कोलकन्दः कृमिघ्नश्च पञ्जलो वस्त्रपञ्जलः । पुटालुः सुपुटुश्चैव पुटकन्दस्तथा 'नृपे' ॥ ३७ ॥

गुणाः—कोलकन्दः कटुश्चोष्णो विषवांतिकृमिघ्नकः ।

## ३६ वाराही-गेंटी, भिवोलीकन्द ।

नामानि—वाराही सूकरी क्रोडकन्या गृष्टिश्च गृष्टिका ॥ ३८ ॥ कन्या विष्वक्सेनकांता वराही ब्रह्मपुत्रिका । क्रौडीत्रिनेत्रकौमारी माधवेष्टा महौषधिः ॥ ३९ ॥ क्रोडो सूकरकन्दश्च वन्यश्च कुष्ठ-नाशनः । वनवासी महावीर्यो तथा शबरकन्दकः ॥ ४० ॥ वराहकन्दो वीरश्च ब्राह्मकन्दः सुकन्दकः । वृद्धिदोष्याधिहंता च त्वमृतो 'राज-नामके' ॥ २४ ॥ माधवी सौकरी कान्तिः कान्ता च वनमालिनी । वक्त्रालुः श्वासकन्दश्च शौकरी 'केयदेवके' ॥ ४२ ॥ 'द्रव्ये' तु शबरीकन्दः किटिः क्रोडा च 'मादने' । तथा कांक्षी च संप्रोक्ता 'गणनामनिघण्टके' ॥ ४३ ॥ विष्वक्सेनप्रिया चैव बदरा 'त्वमरे' स्मृता ।

गुणाः—वाराही तिक्तकटुका विषपित्तकफापहा ॥ ४४ ॥ कुष्ठ-मेहकृमिहरा वृष्या वल्या रसायनी । 'नृपे' प्रोक्ता तथा 'द्रव्ये' घातघ्नी कफनाशनी ॥ ४५ ॥ मधुरातिशुक्रला च तथा शुक्रकरा 'मदे' । मूत्ररोगहरा चोष्णा 'गणे' प्रोक्ता भिषक्जनैः ॥ ४६ ॥

## ३७ विष्णुकन्द ।†

नामानि—विष्णुकन्दो विष्णुगुप्तः सुपुटो बहुसंपुटः । जलवासो बृहत्कन्दो दीर्घवृत्तो हरिप्रियः ॥ ४७ ॥

---

* जङ्गलों और पर्वतोंपर इसकी बेलि बहुत फैलती है । इसके पत्ते पानके समान और कन्द आलू अथवा बृषणके समान होती है और ऊपर सुवरके बालके समान रोवें रहते हैं । यह कन्द हाथ भर गहरी जमीनमें दो दो निकलती हैं इसे शूकर खोद कर प्रेमसे खाते हैं ।

† विष्णु कन्द कोकण प्रान्तमें बहुत होता है ।

गुणाः—विष्णुकन्दस्तु मधुरः शिशिरः पित्तदाहहा। शोफहा रुचिदश्चैव सन्तर्पणकरो 'नृपे'॥ ४८॥

## ३८ धरणीकन्द।*

नामानि—धरणी धारणी चैव वीरपत्री सुगन्धकः। कन्दालुवनकन्दश्च कन्दाढ्यो दण्डकन्दकः॥ ४९॥ 'राजनाम्नि' तथा वीरपत्नी चैव सुकन्दकः। कन्दाढ्यश्च तथा प्रोक्तो वैद्यविद्याविशारदैः॥ ३३॥

गुणाः—ततस्तु धरणीकन्दो मधुरः कफपित्तहा। वक्त्रदोषहरां कण्डूकुष्ठघ्नो 'राजनामके'॥ ५१॥

## ३९ नाकुली-नकुलकन्द।

नामानि—नाकुली सर्पगन्धा च सुगन्धा रक्तपत्रिका। ईश्वरी नागगन्धा च त्वहिभुक् सुरसा तथा॥ ५२॥ सर्पादनी व्यालगन्धा प्रोक्ता 'राजनिघण्टके'। तथा सर्पसुगन्धा च तथैव भोगिगन्धिका॥ ५३॥ 'धन्वन्तरिनिघण्टे' तु प्रोक्ता रोचकपत्रिका। नकुलेष्टा महातीर्था विषघ्नी सुवहा तथा॥ ५४॥ सुनन्दा विषदंष्ट्री च 'कैये' तु चिरपत्रिका। ततो नागसुगन्धा च भुजङ्गाक्षी तथैव च॥ ५५॥ सर्पाङ्गी विषनाशा च प्रोक्ता 'भावप्रकाशके'।

## ४० गन्धनाकुली, सर्पाक्षी-सुगन्धनकुलकन्द।

नामानि—अन्या महासुगन्धा च सुवहा गन्धनाकुली॥ ५६॥ सर्पाक्षी फणिहंत्री च नकुलाढ्याऽहिभुक् तथा। विषमर्दनिका चाहिमर्दिनी विषमर्दिनी॥ ५७॥ महाहिगन्धाऽहिलता प्रोक्ता 'राजनिघण्टके'। नकुलेष्टा तु छत्राक्षी 'धन्वन्तरिनिघण्टके'॥ ५८॥ छत्राकी कामचारी च 'कैये' तु सर्पलोचना।

गुणाः—नाकुलीयुगुलं तिक्तं कटूष्णं च त्रिदोषजित्॥ ५९॥ अनेकविषविध्वंसि 'राजनामनिघण्टके'। कृमिवृश्चिकसर्पादिविषहृत् व्रणरोपणं॥ ६०॥ 'धन्वन्तरिनिघण्टे' च 'कैये' सतलुतापहं॥ ६१॥

## ४१ मालाकन्द।

नामानि—मालाकन्दः पंक्तिकन्दस्तथा च त्रिशिखीदला॥ ६२॥

* धरणीकन्द अनूप देशमें होता है

कन्दलताऽऽवलीकन्दो ग्रंथिदला तु 'राजके' ॥

गुणाः—मालाकन्दो गण्डमालानाशनो दीपनस्तथा ॥ ६३ ॥ गुल्महा वातश्लेष्मघ्नस्तीक्ष्णश्च 'नृपनामके'।

## ४२ विदारी कन्द ।

नामानि—विदारिका स्वादुकन्दा सिताशुक्ला शृगालिका ॥६४॥ विदारी वृष्यकन्दा च विडाली वृष्यवल्लिका । भूकूष्मांडी स्वादुलता गजेष्टा वारिवल्लभा ॥६५॥ तथा कन्दफला चैव 'राजनामनिघण्टके'। तथा इक्षुविदारी च वल्लिशाकफलं तथा ॥६६॥ तद्वत्कन्दपलाशश्च श्रेष्ठकन्देक्षुवल्लरी। कन्दवल्ली वृष्यफलात्विक्षुकन्देक्षुवल्लिका ।६७। तथा चेक्षुलता चैव प्रोक्ता 'केयनिघण्टके'। वृष्यगन्धो विडालिश्च वृष्यपर्णी तु 'द्रव्यके' ॥६८॥ क्रोष्टी 'भावप्रकाशे' च गजवाजि-प्रिया 'गणे'।

गुणाः—विदारी मधुरा शीता गुरुः स्निग्धाऽस्रपित्तजित् ॥६९॥ कफकृत्पुष्टिकृद्बल्या 'नृपे' वीर्यविवर्धिनी । 'धन्वे' समीरजित्प्रोक्ता 'केये' स्वर्या तथैव च ॥ ७० ॥ वर्णदा स्तन्यदा प्रोक्ता 'द्रव्ये' तु वातिजित्तथा । रक्तह्वातहृत् चैव प्रोक्ता 'मदनपालके' ॥ ७१ ॥

## ४३ क्षीरविदारी ।*

नामानि—ततः क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्लरी। इक्षुवल्ली क्षीरकन्दः क्षीरवल्ली पयस्विनी क्षीरशुक्ला क्षीरलता पयःकन्दा पयोलता । पयोविदारिका चैव प्रोक्ता 'राजनिघंटके' ॥ ७२ ॥ शुक्ला तु क्षीरशुक्ला च त्विक्षुपर्णी सुकन्दका । शुक्लकन्दा महाश्वेता पयस्विनीक्षुगन्धिका ॥७३॥ 'केयदेवनिघंटे' तु प्रोक्ता वैद्यविशारदैः । 'द्रव्ये' त्विक्षुलता चैव ऋक्षगन्धाऽमरे' तथा ॥ ७४ ॥

गुणाः—अथ क्षीरविदारी तु मधुराम्ला कषायका। तिक्ता च पित्तशूलघ्नी मूत्रमेहहरा 'नृपे' ॥ ७५ ॥ क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः । विनालो रोगहर्ता स्याद्वयस्तंभी सनालकः ॥ ७६ ॥

*क्षीरविदारी अथवा क्षीरकन्द दो प्रकारका है । एक विनाल अर्थात् डण्ठी रहित और एक सनाल अर्थात् डण्ठीवाला ।। बिना डण्ठीका रोग हरण करनेवाला और डण्ठीवाला वयस्तम्भक है ।

## ४४ शाल्मलीकन्द-सेमरका मुसला ।

नामानि—शाल्मलीकन्दकश्चाथ विज्जुलो बनवासकः । वनवासी मलघ्नश्च मलहन्तेति 'राजके' ॥ ७७ ॥

गुणाः—ततस्तु शाल्मलीकन्दो मधुरो मलरोधजित् । शिशिरः पित्तदाहघ्नो शोषसंतापहा 'नृपे' ॥ ७८ ॥

## ४५ चंडालकन्द ।

नामानि—प्रोक्तश्चण्डालकन्दः स्यादेकपत्रो द्विपत्रकः । त्रिपत्रऽथ चतुष्पत्रः पञ्चपत्रश्च भेदतः ॥ ७९ ॥

गुणाः—चण्डालकन्दो मधुरः कफपित्तास्रदोषजित् । विषभूतहरः प्रोक्तो 'नृपे' चैव रसायनः ॥ ८० ॥

## ४६ तैलकन्द-तेलकन्द ।

नामानि—तैलकन्दो द्रावकन्दस्तिलांकितदलस्तथा । ततः करवीरकन्दस्तिलचित्रपत्राह्वकः ॥ ८१ ॥

गुणाः—तैलकन्दो लोहद्रावी कटूष्णो विषहारकः । वातापस्मारशोफघ्नो तथा च रसबन्धकः ॥ ८२ ॥ देहशुद्धिकरः प्रोक्तो 'राजनामनिघंटके' ।

## तैलकन्दस्वरूपः ।

अश्वारिपत्रसंकाशस्तिलबिन्दुसमन्वितः ॥ ८३ ॥ संस्निग्धाधस्थभूमिश्च तिलकन्दोऽतिविस्तृतः ।

## ४७ त्रिपर्णीकन्दः ।

नामानि—त्रिपर्णिका वृहत्पत्री छिन्नग्रन्थिनिका तथा ॥ ८४ ॥ कन्दालः कन्दबहलाऽप्यम्लवल्ली विषापहा ।

गुणाः—त्रिपर्णी मधुरा शीता श्वासकासव्रणापहा पित्तप्रकोपशमनी विषघ्नी 'राजनामके' ॥ ८५ ॥

## ४८ लक्ष्मणाकन्द ।

नामानि—लक्ष्मणा पुत्रकन्दा च पुत्रदा नागिनी तथा । नागाह्वा नागपत्नी च तुलिनी मञ्जिका तथा ॥ ८६ ॥ अस्रबिन्दुच्छदा चैव पुंस्त्वदा 'राजनामके' । रक्तबिन्दुच्छदा नागा नागपत्री तथैव

च ॥ ८७ ॥ ततस्तु पुत्रजननी 'कैयदेवनिघंटके' । रम्या तु बिन्दुपत्रा च 'द्रव्यरत्नाकरे' स्मृता ॥ ८८ ॥ पुत्रकाकाररक्ताल्पबिन्दुभिर्लाञ्छिता सदा । वस्तगन्धाकृतिश्चैव संप्रोक्ता 'भावनामके' ॥ ८६ ॥

गुणाः—लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशिनी । रसायनकरी बल्या त्रिदोषशमनी 'नृपे' ॥ ६० ॥ रूक्षा वृष्या हिमा 'कैये' प्रोक्ता पित्तानिलापहा ।

## ४६ हस्तजोडिका-हाथजोडी ।

नामानि—करजोडिर्हस्तजोडिः प्रोक्तो 'राजनिघंटके' ॥ ६१ ॥

गुणाः—वश्यकृत् करजोडिस्तु रसबन्धकरस्तथा ।

## ५० मुसलीकन्द-काली मुसली ।

नामानि—मुसली तालमूली च सुवहा तालमूलिका ॥ ६२ ॥ गोधापदी हेमपुष्पी भूताली दीर्घकन्दिका । प्रोक्ता 'राजनिघण्टे' तु भिषक्विद्योपजीविभिः ॥ ६३ ॥ हिरण्यपुष्पी खर्जूरी खलिनी मौशली तथा । वृष्यकन्दा तालपत्री महावृष्या तु 'कैयके' ॥ ६४ ॥ महावृषा 'मदे' चैव तथा कांचनपुष्पिका ।

गुणाः—मुसली मधुरा शीता वृष्या पुष्टिबलप्रदा ॥ ६५ ॥ पिच्छला कफदा पित्तदाहश्रमहरा परा । मुसली स्याद्द्विधा प्रोक्ता श्वेताचापरसंज्ञका ॥ ६६ ॥ श्वेता स्वल्पगुणोपेता अपरा च रसायनी । 'नृपे' प्रोक्ता तथा 'कैये' अर्शोघ्नी वातनाशनी ॥ ६७ ॥

## ५१ गुच्छकन्द ।

नामानि—गुच्छाऽहकन्दो गुलुच्छकन्दस्तबककन्दकः । विघंटिकाभिधा चैव विघट्टिका तथा 'नृपे' ॥ ६८ ॥

गुणाः—गुलुच्छकन्दो मधुरः शीतलो वृष्य एव च । सन्तर्पणो दाहहेति प्रोक्ता 'राजनिघंटके' ॥ ६६ ॥

## ५२ वास्तुक-बथुवा ।

नामानि—वास्तुकं वास्तु वास्तूकं वस्तूकं हिलमोचिका । शाकराजो राजशाकश्चक्रवर्ती 'नृपे' तथा ॥ २०० ॥ वीरशाकं शाकवीरः क्षारपत्रः प्रसादकः । 'कैये' प्रोक्तस्तथा 'भावे' शाकराट परिकीर्तितः ॥ २०१ ॥

गुणाः—वास्तुकं मधुरं शीतं क्षाराम्लं त्रिदोषजित् । ज्वराशोघ्नं रोचनं च मलमूत्रादिशुद्धिकृत् ॥ २०२ ॥ 'नृपे' प्रोक्तस्तथा 'कैये' पाचनो हृद्य एव च । रक्तपित्तकृमिप्लीहोदावर्तघ्नः सरस्तथा ॥ २०३ ॥ मेधाग्निकृच्च संप्रोक्तो बलकृच्छुक्रकृत्तथा ।

## ५३ चुक्र—चूका ।

नामानि—चुक्रं तु चुक्रवास्तूकं लिकुचं चाम्बलास्तुकम् ॥२०४॥ दलाम्लमम्लशाकाख्यमम्लादिहिलमोचिका । अम्लपत्रा तु कविभिः संप्रोक्तम् 'राजनामके' ॥ २०५ ॥ 'द्रव्यरत्नाकरे' चैव चुक्रकं परिकीर्तितम् । चुक्रिका चैव पत्राम्ला रोचनी शतवेधिका ॥ २०६ ॥ प्रोक्ता 'भावप्रकाशे' तु वैद्यविद्याविशारदैः । वेदभूसंख्यका प्रोक्ता पुरातनचिकित्सकैः ॥ २०७ ॥

गुणाः—चुक्रं त्वम्ललघूष्णं च वातगुल्मविनाशनम् । रुचिकृद्दीपनं पथ्यमीषत्पित्तकरम् 'नृपे' ॥ २०८ ॥

## ५४ चिल्लिका—चिल्ली, बड़ा बथुवा ।

नामानि—पलाशलोहिता चिल्ली वास्तुका चिल्लिका तथा । मृदुपत्री क्षारदला चोरपत्री तु वास्तुकी ॥२०९॥ दलाग्रलोहिता चैव प्रोक्ता 'राजनिघण्टके' । बृहद्दला तु रक्ता च तथैव गौडवास्तुका ॥ २१० ॥ प्रोक्ता 'मदनपाले' तु वैद्यविद्याविशारदैः ।

गुणाः—चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत् ॥२११॥ प्रमेहमूत्रकृच्छ्रघ्नी पथ्या तु रोचनी 'नृपे' ।

## ५५ श्वेतचिल्ली* ।

नामानि—श्वेतचिल्ली तु वास्तूकी सुपथ्या श्वेतचिल्लिका ॥ २१२ ॥ सितचिल्ल्युपचिल्ली च ज्वरघ्नी क्षुद्रवास्तुकी । प्रोक्ता 'राजनिघण्टे' तु वसुसंख्या भिषग्वरैः ॥ २१३ ॥

गुणाः—श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा तथा । त्रिदोषशमनी पथ्या ज्वरदोषविनाशिनी ॥ २१४ ॥

---

*इसकी पत्तियां बथुवासे कुछ छोटी होती हैं ।

## ५६ शुनकचिल्ली-कुत्ताचील।

नामानि—शुनकचिल्ली सुचिल्ली श्वानचिल्लीति 'राजके'।

गुणाः—श्वचिल्ली कटुतीक्ष्णा च कण्डुव्रणहरा 'नृपे' ॥ २१५ ॥

## ५७ शिग्रुपत्रशाक-सहिंजनपत्र शाक।

गुणाः—शिग्रुपत्रभवं शाकं रुच्यं वातकफापहम्। कटूष्णं दीपनं पथ्यं कृमिघ्नं पाचनम् 'नृपे' ॥ २१६ ॥

## ५८ पालक्य-पालक।

नामानि—पालक्यं तु पालक्या च मधुरा क्षुरपत्रिका। सुपत्रा स्निग्धपत्रा च ग्रामीणा ग्राम्यवल्लभा ॥२१७॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्यापरायणैः। 'द्रव्यरत्नाकरे' चैव क्षुरिका परिकीर्तिता ॥ २१८ ॥ तथा 'मदनपाले' तु संप्रोक्ता क्षुरपत्रिका।

गुणाः—पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् ॥ २१९ ॥ रक्तपित्तहरं ग्राहि तथा सन्तर्पणम् 'नृपे'।

## ५९ राजगिरा-रामदाना।

नामानि—राजाभिधानपूर्वा तु नगाव्हाद्यपरेण तु ॥२२०॥ राजाद्रिःस्याद्राजगिरि 'नृपे' तु राजशाकिनी।

गुणः—राजशाकनिका रुच्या पित्तघ्नी शीतला तथा ॥ २२१ ॥ सैवाति शीतला रुच्या 'नृपे' तु स्थूलशाकिनी।

## ६० उपोदकी-बड़ी पोई।

नामानि—उपोदकी कलम्बी च पिच्छला पिच्छलच्छदा ॥२२२॥ मोहिनी मदशाकश्च विशाला 'राजनामके'। मच्छकाली पोतकी च सुतुङ्गा 'द्रव्यरत्नके' ॥ २२३ ॥ उपोदका मदघ्नी च सुगन्धा मदकालिका। वृन्दारका तु कण्टकी प्रोक्ता 'गणनिघण्टके ॥२२४॥ षट्भूमिसंख्यका प्रोक्ता पुरातनचिकित्सकैः।

गुणाः—उपोदकी कषायोष्णा विष्टम्भश्लेष्मकारिणी ॥ २२५ ॥ कटुका मधुरा रुच्या निद्रालस्यकरी 'नृपे'। 'द्रव्ये' शीता शुक्रकारी 'गणे' मेहहरा स्मृता ॥ २२६ ॥

## ६१ क्षुद्रोपोदकी-छोटी पोई ।

नामानि—उपोदकी परा क्षुद्रा सूक्ष्मपत्रा तु मण्डपी ।

गुणाः—रसवीर्यविपाकेषु सदृशी पूर्वया स्वयं ॥ २२७ ॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ।

## ६२ वनजोपोदकी-वनपोई ।

नामानि—वनजा वनजाव्हा च वनजोपोदकी 'नृपे' ॥ २२८ ॥

गुणाः—वनजोपोदकी तिक्ता कटूष्णा रोचनी च सा ।

## ६३ मूलपोती-मूलपोई ।

नामानि—मूलपोती क्षुद्रवल्ली पोतिका क्षुद्रपोतिका ॥ २२९ ॥ क्षुद्रोपोदकनाम्नी च वल्लिः शाकटपोतिका । वल्लिशाकस्तथा वल्लिपोतिका 'राजनामके' ॥ २३० ॥

गुणाः—मूलपोती त्रिदोषघ्नी वृष्या बल्या लघुश्च सा । बलपुष्टिकरी रुच्या जठरानलदीपनी ॥ २३१ ॥

## ६४ कुणंजर-लहेसुवा ।

गुणाः—कुणंजरस्त्रिदोषघ्नो मधुरो रुच्यदीपकः ॥ २३२ ॥ ईषत्कषायः संग्राही पित्तश्लेष्मकरो लघुः । प्रोक्तो 'राजनिघण्टे' तु भिषक्विद्याविशारदैः ॥ २३३ ॥

## ६५ कौसुम्भशाक-कुसुमशाक ।

गुणाः—कौशुम्भशाकं मधुरं कटूष्णं विण्मूत्रदोषापहरं मदघ्नं । दृष्टिप्रसादं कुरुते विशेषाद्रुचिप्रदं दीप्तिकरं च वन्हेः ॥ ३४ ॥ प्रोक्तं 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ।

## ६ शतपुषपदल-सोवाशाक ।

गुणाः—शतपुष्पादलं सोष्णं मधुरं गुल्मशूलजित् ॥ ३५ ॥ वातघ्नं दीपनं पथ्यं पित्तकृद्रुचिदं 'नृपे' ।

## ६६-तंडुलीयपत्र-चौराई भाजी ।

गुणाः—तुण्डुलीयकदलं हिममर्शःपित्तरक्तविषकासविनाशि । ग्राहकं च मधुरं च विपाके दाहशोषशमनं रुचिदायि ॥ ३६ ॥ प्रोक्तं 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ २३७ ॥

## ६७ राजिकापत्र–राईका शाक ।

गुणाः—कटूष्णं राजिकापत्रं कृमिवातकफापहं । कण्ठामयहरं स्वादुवन्हिदीपनकं 'नृपे' ॥ २३८ ॥

## ६८ सार्षपपत्र–सरसोंका शाक ।

गुणाः—सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपनुत् । विदाहि कटुकं स्वादु शुक्रहृद्धृद्धिदं 'नृपे' ॥ २३६ ॥

## ६९ चांगेरीशाक–आंबी लोना ।

गुणाः—चांगेरीशाकमत्युष्णं कटुरोचनपाचनं । दीपनं कफवातार्शःसंग्रहण्यतिसारजित् ॥ ४० ॥ प्रोक्तं 'राजनिघण्टे' तु वैद्यशास्त्रविशारदैः ।

## ७० घोली–बड़ी लोनिया ।

गुणाः—घोला च घोलिका घोली कलन्धुष्कुम्भकालुकं ॥४१॥ 'राजनामनिघण्टे' तु संप्रोक्ता भिषजांवरैः । लोणा 'केये' तथा 'द्रव्ये' वनस्था त्वम्लपर्णिका ॥ ४२ ॥ दुर्जरा चैव पिच्छा च पुनर्भूः पिच्छलच्छदा । लोणिका 'केयदेवे' च तथा 'भावप्रकाशके' ॥ ४३ ॥ बृहल्लोणी तु लोणी च प्रोक्ता वैद्यविशारदैः ।

## क्षेत्रजा घोली–कुलफा ।

गुणाः—क्षेत्रजं लवणं रुच्यमम्लं वातकफापहम् ॥ ४४ ॥

## ७१ आरामघोलिका–लोनियां ।

गुणाः—आरामघोलिका चाम्ला रूक्षा रुच्याऽनिलापहा ।

## ७२ सूक्ष्मघोलिका-छोटी लोनियां ।

गुणाः—पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ॥ ४५ ॥

## ७३ जीवशाक ।

नामानि—जीवन्तो रक्तनालश्च ताम्रपत्रः सनालकः । शाकवीरस्तु मधुरो जीवशाकश्च मेषकः ॥ ४६ ॥ प्रोक्तो 'राजनिघण्टे' च 'केयदेवे' तु वास्तुकः । तथा जीवन्तकः प्रोक्तो वैद्यविद्याविशारदैः ॥ २४७ ॥

गुणाः—जीवशाकः सुमधरो बृंहणो बस्तिशोधनः । पित्तघ्नो दीपनो बल्यो पाचनो वृष्य एव च ॥ ४८ ॥ प्रोक्तो 'राजनिघण्टे' तु त्रिदोषघ्नश्च 'कैयके'।

## ७४ गौर सुवर्णशाक-सोनभाजी ।*

नामानि—ततो गौरसुवर्णं च स्वर्णं सौगन्धिकं तथा ॥ ४६ ॥ भूमिजं वारिजंह्रस्वं गन्धशाकं तथैव च । कटुश्शृङ्गाटकं चैव वर्णशाकं तु 'राजके' ॥ २५० ॥

गुणाः—गौरसुवर्णं शिशिरं कफपित्तज्वरापहम् । पथ्यं दाहारुचिभ्रान्तिरक्तश्रमहरं 'नृपे' ॥ २५१ ॥

## ७५ वर्षाभूशाक-विषखपरा ।

## ७६ वसुपत्रशाक-सफेदवसु ।

गुणाः—वर्षाभूवसुकौ वर्णकफमांद्यानिलापहौ । शाके रूक्षतरौ गुल्मप्लीहशूलापहारकौ ॥ २५२ ॥

## ७७ फंजिका, जीवनी, पद्मा, तर्कारी, चंचुक ।

नामानि—फांजी, हरणदोडी या डोडी, भारङ्गी, नरवेल, या अरनी, चोंच या चञ्चु ।

नामानि—फंजिका जीवनो पद्मा तर्कारी चंचुकाः पृथक् ।
गुणाः—वातामयहरं ग्राहि दीपनं रुचिदायकं ॥ ५३ ॥

## ७८ फञ्जादिशाक-फांजी आदि की भाजी

फंजादिपंचकं भेडा कुणजस्त्रिपुटस्तथा ॥ इत्यादिनवपत्राणां शाकमेकत्र योजितम् ॥ ५४ ॥

गुणाः—दीपनं पाचनं रुच्यं बलवर्णविधायकं । त्रिदोषशमनं पथ्यं ग्राहि वृष्यं सुखावहम् ॥ २५५ ॥

## ७९ कूष्मांडी-पेठा, सफेद कुम्हड़ा ।

नामानि—कर्कोटिका च कूष्मांडी कुम्भांडी तु वृहत्फला । सुफलास्यात्कुंभफला नागपुष्पफला 'नृपे' ॥ ५६ ॥ 'धन्वन्तरौ'

* चित्रकूट प्रान्तके आसपास होती है ।

क्षीरफला सोमसृष्टा च पीतिका। ततः स्थिरफला चैव सोमका त्वमृता तथा ॥ ५७॥ महत्फला पुष्पफला तथैव सोमयष्टिका। गुडयोगफला चैव प्रोक्ता कर्कारुकस्तथा ॥ ५८ ॥ राजकर्कटीनाम्नी च 'कैयदेवनिघण्टके'। कूष्मांडकी कर्कटी च 'द्रव्यरत्ने' महाफला ॥ २५६ ॥ 'भावप्रकाशे' संप्रोक्तं कूष्माण्डं कविभिर्ध्रुवम्।

गुणाः—'राजनिघण्टे'। मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीच्छेदनं विण्मूत्रम्लपनं तृषार्तिशमनं जीर्णांगपुष्टिप्रदं। वृष्यं स्वादुतरं त्वरोचकहरं बल्यं च पित्तापहं। कूष्मांडं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥ ६० ॥ वातपित्तहरं हृद्यं बस्तिशुद्धिकरं तथा ॥ ६१ ॥ चित्तवैकारनुत् प्रोक्तं 'धन्वन्तरिनिघण्टके'। कफवातहरं रूक्षं संप्रोक्तं 'कैयदेवके' ॥ ६२ ॥ 'मदने' रक्तपित्तघ्नं वातहृत्कविभिः स्मृतं।

## ८० गोरक्षतुम्बी-बड़ी लौकी, दुधी।

नामानि—गोरक्षतुम्बी गोरक्षी नवालाबुर्घटाभिधा ॥ २६३ ॥ कुम्भालाबुर्घटालाबुः कुम्भतुम्बी तु 'राजके'।

गुणाः—गोरक्षतुम्बी मधुरा शिशिरा, पित्तहा गुरुः ॥ ६४ ॥ रुच्या सन्तर्पणी बल्या वीर्यदा पुष्टिदा 'नृपे'।

## ८१ दुग्धतुम्बी-दुधिया लौकी।

नामानि—दुग्धतुम्बी क्षीरतुम्बी दीर्घवृत्तफलाभिधा ॥ ६५ ॥ इक्ष्वाकुः क्षत्रियवरा दीर्घबीजा महाफला। क्षीरिणी दुग्धबीजा च दन्तबीजा पयस्विनी ॥ ६६ ॥ महावल्ली महातुम्बी ह्यलाबुश्च श्रमघ्निका। प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥६७॥ राजालाबु रसालाबुर्मधुरालाबुनी तथा। शाकालाबुस्तुम्बकश्च भक्षालाबुस्तु 'कैयके' ॥ ६८ ॥ अलाम्बुनी वृत्ततुम्बी 'द्रव्ये' चालाबुका स्मृता। 'गणे' तुम्बिस्तथा तुम्बी मिष्टा 'मदनपालके' ॥ २६९ ॥

गुणाः—तुम्बी सुमधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत्। वृष्या वातप्रदा चैव बलपुष्टिकरा 'नृपे' ॥ ७० ॥ 'धन्वन्तरौ' शीतला च 'कैये' विष्टम्भकरिका। कफपित्तहरा प्रोक्ता पुरातनभिषग्वरैः ॥ २७१ ॥

## *८२ भूतुम्बी-पाताल तुम्बी ।

नामानि—भूतुम्बी नागतुम्बी च शक्रचापसमुद्भवा । वल्मीकसंभवा देवी दिव्यतुम्बी तु 'राजके' ॥ ७२ ॥

गुणाः—भूतुम्बी कटु कोष्णा च सन्निपातापहारिणी । दन्तार्गला दन्तरोधधनुर्वातहरा 'नृपे' ॥ ७३ ॥

## ८३ कलिङ्ग-तरबूजा ।

नामानि—ततोमांसफलश्चैव कलिंगश्चित्रवल्लिकः, वृत्तफलो मांसलश्च चित्रो मधुफलस्तथा ॥ ७४ ॥ घृणाफलश्च संप्रोक्तो 'राजनामनिघण्टके' । कालेन्दकं तु कालिङ्गं कृष्णबीजं तु 'केयके' ॥ ७५ ॥ हरितं वर्तुलफलं 'द्रव्यरत्नाकरे' स्मृतं । सुवर्तुलं तु कालिन्दं स्मृतं 'भावप्रकाशके' ॥ ७६ ॥

गुणाः—कलिङ्गो मधुरः शीतः पित्तदाहश्रमापहः । वृष्यः सन्तर्पणो बल्यो वीर्यपुष्टिकरो 'नृपे' ॥ ७७ ॥ ग्राही च गुरुविष्टम्भी ह्यभिष्यंदकरो ध्रुवं । शुक्रनुत् पित्तहृच्चैव कफवातकरं तथा ॥ ७८ ॥ पक्वं तु शीतमुष्णं स्यात् 'केये' च कफवातहृत् ।

## ८४ धाराकोशातकी-तरोई ।

नामानि—कोशातकी स्वादुफला सुपुष्पा तदनंतरं ॥ ७९ ॥ कर्कोटकी पीतपुष्पा तथा धाराफला स्मृता । धामार्गवो दीर्घफला सुकेशा 'राजनामके' ॥ ८० ॥ 'धन्वन्तरिनिघण्टे' तु जालिनी कृतवेधना ।

गुणाः—धाराकोशातकी स्निग्धा मधुरा कफपित्तनुत् ॥ ८१ ॥ ईषद्वातकरी पथ्या रुचिकृद्बलवीर्यदा । 'नृपे' धन्वन्तरौ' चैव पक्वामाशयशोधनी ॥ ८२ ॥ पित्तघ्नो दीपनो श्वासकासज्वरकृमिघ्निका । वातला कफपित्तघ्ना 'केयदेवे' प्रकीर्तिता ॥ ८३ ॥ शोफ-

* यह नागतुम्बी सांपकी बांबीमें उत्पन्न होती है । बांबीमें बिच्छूके डङ्कके समान पीले रङ्गके कांटे दिखाई पड़ते हैं । उसके नीचे बांबीमें तुम्बीके समान काले रङ्ग की नागतुम्बी होती है । एक जगह पर यह पांच सात मिलती है । यह बड़ी विचित्र औषधि है । इसे बांट कर पिलाने और मस्तक पर लेप करनेसे अनेक प्रकारके विष नष्ट होते हैं ।

पांडूदरप्लीह कुष्ठार्शःकफपित्तहा । तत्फलं भेदनं शीतं लघु मेहत्रिदोषहृत् ॥ ८४ ॥ प्रोक्तं 'मदनपाले' तु वैद्यविद्याविशारदैः ।

## ८५ हस्तिकोशातकी-घियातरोई, नेनुआं ।

नामानि—हस्तिकोशातकी चैव बृहत्कोशातकी तथा ॥ ८५ ॥ महाकोशातकी वृत्ता ग्रास्यकोशातकी 'नृपे' । धामार्गवः कोशफला राजकोशातकी तथा ॥ ८६ ॥ कर्कोटकी पीतपुष्पा महाजालीति 'धन्वके' । हस्तिघोषा 'कैयदेवे' 'मदने' राजिमत्फला ॥ ८७ ॥ घोषका हस्तिपर्णश्च 'भावे' प्रोक्ता महाफला ।

गुणाः—हस्तिकोशातकी स्निग्धा मधुराऽऽध्मानवातकृत् ॥८८॥ वृष्या कृमिकरी चैव व्रणसंरोपणी 'नृपे' । ज्वरान्ते हितकृ 'द्धन्वे' 'कैये' तु गुरुश्लेष्मका ॥ ८९ ॥ 'द्रव्ये' वातहरा प्रोक्ता 'मदे' शीता प्रकीर्तिता । पित्तघ्नी दीपनी श्वासज्वरघ्नी प्रोच्यते बुधैः ॥ २९० ॥

## ८६ स्वादुपटोली-मीठा परवर ।

नामानि—ततः स्वादुपटोली तु पटोली मण्डली तथा । मधुरा तु पटोली स्यात्प्रोक्ता दीर्घपटोलिका ॥ ९१ ॥ स्निग्धपर्णी 'नृपे' चैव तथा स्वादुपटोलिका । पांडुको राजमान्यश्च ज्योत्स्नाजाली तथैव च ॥ ९२ ॥ ततो राजपटोली च संप्रोक्ता 'कैयदेवके' । चिचुण्डो वेश्मकूलश्च श्वेतराजी बृहत्फला ॥ ९३ ॥ प्रोक्ता 'मदनपाले' तु 'भावे च गृहकूलकः । चिचिण्डश्च सुदीर्घश्च प्रोक्तो वैद्यविशारदैः ॥ ९४ ॥

गुणाः—पटोली स्वातु पित्तघ्नी रुचिकृज्ज्वरनाशनी । बलपुष्टिकरी पथ्या दीपनी पाचनी 'नृपे' ॥ ९५ ॥ पटोलपत्रं पित्तघ्नं नालं तस्य कफापहं । फलं त्रिदोषशमनं मूलं चास्य विरेचनं ॥ ९६ ॥ प्रोक्तं 'राजनिघंटे' तु त्रिदोषघ्नी तु 'धन्वके' । 'कैये' हृद्यं सरं चोष्णं कफपित्तहरं ध्रुवं ॥ ९७ ॥ कण्डुदाहतृषाघ्नं च स्फोटकुष्ठज्वरास्रजित् ॥

## ८७ दधिपुष्पी-बड़ी सेम, चमारी सेम ।

नामानि—दधिपुष्पी तु खट्वांगी कूपा पर्यंकपादिका ॥ ९८ ॥ खट्वापादी तु वंश्या च काकांडी कोलपादिका । खट्वा चैव तथा

प्रोक्ता 'राजनामनिघण्टके' ॥ ६६ ॥ 'द्रव्ये' कृष्णफला चैव काकांडोला त्रिपर्णिका । 'कैयदेवे' कोलशिम्बी तथा सूकरपादिका ॥३००॥

गुणाः—खट्वांगी मधुरा कट्वी शीता सन्तापपित्तहा । गुर्वी वातकरी रुच्या 'राजनामनिघण्टके' ॥ ३०१ ॥ वातपित्तहरा 'द्रव्ये' 'भावे' चोष्णानिलापहा । कफपित्तहरा चैव शुक्रघ्निबलविट्करी ॥ ३०२ ॥

## ८८ खड्गशिंबी-गोजिया सेम ।

नामानि—असिशिंबी खड्गशिंबी शिंबी निस्त्रिंशशिंबिका । स्थूलशिंबी बृहच्छिम्बी महाशिम्बी सुशिम्बिका ॥ ३ ॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः । कुत्सवल्ली कुत्सशिम्बी कुत्सा पुस्तकशिम्बिका ॥ ४ ॥ पुस्तकाख्या पुस्तकशिम्बी कुशिम्बी 'कैयदेवके' । खड्गा सूकरपादी च शारदी नीलपुष्पका ॥ ५ ॥ 'द्रव्यरत्नाकरे' चैव संप्रोक्ता वैद्यनायकैः। शिंबिः शिम्बी तथा 'भावे' संप्रोक्ता वैद्यनायकैः ॥ ६ ॥

गुणाः—असिशिम्बी तु मधुरा कषाया श्लेष्मपित्तजित् । व्रणदोषहरा शीता रुचिकृद्दीपनी 'नृपे' ॥ ७ ॥ वातश्लेष्महरा बल्या श्लेष्मला दाहनाशिनी । 'कैये' प्रोक्ता तथा 'द्रव्ये' कफवातहरा ध्रुवं ॥ ८ ॥

## ८९ कारवल्ली-करैला ।

नामानि—करका कारवल्ली च चीरिपत्रः करिल्लका । सूक्ष्मवल्ली कण्टफला पीतपुष्पाऽम्बुवल्लिका ॥ ९ ॥ प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः । तथा 'शिवनिघण्टे' तु मण्डपी चिरितच्छदा ॥ १० ॥ सुकुमारी तु सुषवी तोयवल्लफलाऽखिली । 'कैयदेवे' तु संप्रोक्ता वैद्यशास्त्रज्ञपण्डितैः ॥ ११ ॥ करिल्लं कारवेल्लं तु 'द्रव्यनामनिघंटके' । फलात्मिका राजवल्ली 'गणनामनिघंटके'

गुणाः—कारवल्ली सुतिक्तोष्णा दीपनी कफवातजित् ॥ १२ ॥ अरोचकहरा चैव रक्तदोषहरा 'नृपे' ॥ १३ ॥ 'मदे' तु कामलाघ्नी च 'कैये' वातहरा 'ध्रुवं' । अवृष्या रक्तपित्तघ्नी कृमिपाण्डुव्रणापहा कासश्वासप्रमेहघ्नी कुष्ठाध्मज्वरनाशिनी ।

## ९० कर्कोटकी–वन करैला, खेखसा, ककोडा।

नामानि—कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी ॥ १५ ॥ बोधना चैव कर्कोटी देवी कण्टफला 'नृपे'। विषप्रशमनी चैव कुमारी 'धन्वनामके' ॥ १६ ॥ पीतपुष्पा तथा जाली प्रोक्ता 'मदनपालके'।

गुणाः—कर्कोटी कटु तिक्तोष्णा विषघ्नी वातहारिणी ॥ १७ ॥ दीपनी रोचनी चैव पित्तहृत् 'राजनामके'। श्लेष्महृत् विषदंद्रघ्नी कन्दशीर्षरुजापहः ॥ १८ ॥ प्रोक्ता 'धन्वनिघंटे' तु 'कैये' किलासचित्रहृत्। 'मदे' हृल्लासहृत् 'भावे' श्वासकासज्वरापहा ॥ १६ ॥

## ९१ स्वादुतुण्डिका–मीठा कुन्दरू।

नामानि—स्वादुतुण्डी रक्तफला तुण्डी मधुरबिम्बिका। रुचिरफलोष्णफला पीलुपर्णी तथा स्मृता ॥ २० ॥ मधुबिम्बी 'नृपे' चैव प्रोक्ता वैद्यविशारदैः। तुण्डिकेरिफला बिम्बी ओष्ठोपमफला तथा ॥ २१ ॥ गोल्हा च तुण्डिका चैव 'धन्वन्तरिनिघण्टके'। ओष्ठभा तु चोष्ठफला धीहरा 'द्रव्यनामके' ॥ २२ ॥ 'मदे' दन्तच्छदा चैव रक्तपीतफला 'गणे'। 'कैये' तु विद्रुमफला तथा च तुण्डिकेरिका ॥२३॥ ततो विद्रुमवाक् चैव प्रोक्ता वैद्यविशारदैः। 'शोढले' तु तथा प्रोक्ता छर्दिन्योष्ठी च बिम्बिका ॥ २४ ॥

गुणाः—बिम्बी तु मधुरा शीता पित्तश्वासकफापहा। असृग्ज्वरहरा रम्या कासजि 'द्राजनामके' ॥ २५ ॥ वातुला श्लेष्मला चैव क्षयश्वथुनाशनी। संग्राही कामलाहन्त्री पाके च कटुका 'ध्रुवं' ॥ २६ ॥ रक्तपित्तहरा चैव घाताध्मादिविबन्धकृत्। 'कैयदेवे' भिषक्श्रेष्ठैः कथिता नैव संशयः ॥ २७ ॥ 'धन्वे' तु रक्तपितघ्नी शोफपांडुहरा ध्रुवं। तत्फलं बुद्धिहृत्प्रोक्तं स्तन्यवृद्धिकरं तथा ॥२८॥ मूलं तु वीर्यदं शीतं मेहहृत् 'द्रव्यरत्नके'। 'मदे' भ्रांतिहरं प्रोक्तं 'गणे' वमनहारकं ॥ ३२६ ॥

## ९२ निष्पावी–सेम।

नामानि—निष्पाविका पञ्चधा स्यात् श्वेता कृष्णा च पीतिका। लघ्वी च वृहती चैव गुणैस्तुल्या प्रकीर्तिता ॥ ३० ॥ तथा 'राज-

निघण्टे' तु चतुर्धा परिकीर्तिता । निष्पावी ग्रामजादिः स्यात्फलिनी नखपूर्विका ॥ ३१ ॥ मण्डपी फलिका शिंबी श्वेया गुच्छफला च सा । विशालफलिका चैव निष्पाविश्चिपिटा तथा ॥ ३२ ॥ 'द्रव्य-रत्नाकरे' चैव नलिका परिकीर्तिता ।

## ९३ नखनिष्पाविका-छोटी सेम ।

नामानि—अथांगलीफला चैव नखनिष्पाविका तथा ॥ ३३ ॥ वृत्तनिष्पाविका ग्राम्या नखगुच्छफला 'नृपे' ।

गुणाः—निष्पावौ द्वौ हरिच्छुभ्रौ कषायौ मधुरौ सरौ ॥ ३४ ॥ कण्ठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ । संग्राहि समवीर्यः स्यादीषच्छ्रेष्ठो द्वितीयकः ॥ ३५ ॥ प्रोक्तौ 'राजनिघण्टे' तु कफपित्त-हरौ 'द्रव्ये' ।

## ९४ वार्ताकी-बैंगन, भटा ।

नामानि—वार्ताकी कण्टवृंताकी कण्टालुः कण्टपत्रिका ॥३६॥ निद्रालुर्मांसलफला वृंताकी च महोटिका । चित्रफला कण्टकिनी महती कट्फला तथा ॥३७॥ मिश्रवर्णफला नीलफला रक्तफला च सा । शाकश्रेष्ठा वृत्तफला नृपप्रियफला 'नृपे' ॥३८॥ भंटाकी वार्तिका वृंता भंटिका 'धन्वनामके' । 'कैयदेवनिघण्टे' तु कथिता चोर-भण्डिका ॥ ३९ ॥ वार्ताकिनी तु निद्रालुः कथिता नीलकण्टका । महापथ्या पथ्यतमा बहुवीर्या रसोत्तमा ॥ ४० ॥ वैद्यविद्याप्रवीणैस्तु संप्रोक्ता 'धन्वनामके' ।

गुणाः—वार्ताकी कटुका रुच्या मधुरा पित्तनाशनी ॥ ४१ ॥ बलपुष्टिकरी हृद्या गुरुर्वातकरा 'नृपे' । स्वादूष्णं च तथा तीक्ष्णं पाके तु कटु दीपनम् ॥ ४२ ॥ शुक्लं कफवातघ्नं वृंताकं 'धन्व-नामके' । ज्वरकासक्रिमिहरं पक्वं स्यात्पित्तकारकम् ॥४३॥ बालं पित्तकफघ्नं च 'कैये' प्रोक्तं भिषग्जनैः । वृंताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् ॥ ४४ ॥ कफमेदोनिलामघ्नमत्यर्थं लघु दीपनम् । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् ॥ ४५ ॥ प्रोक्तं 'भाव-प्रकाशे' तु वैद्यविद्याविशारदैः ।

## ९५ डंगरी-काशीकुम्हड़ा, लालकुम्हड़ा ।*

नामानि—डंगरी डांगरी चैव दीर्घर्वारुश्च डंगरिः ॥ ४६ ॥ डंगारी नागशुण्डी च गजदन्तफला 'नृपे' । कूष्मांडिकी पीतपुष्पा ग्राम्या पीतफला तथा ॥ ४७ ॥ गुडयोगफला चैव प्रोक्ता 'शिवनिघण्टके' ।

गुणाः—डुङ्गरी शीतला रुच्या दाहपित्तास्रदोषजित् ॥ ४८ ॥ शोषहृत्तर्पणी गौल्या जाड्यहा मूत्ररोधनुत् । प्रोक्ता 'राजनिघण्टे' तु वैद्यविद्याविशारदैः ॥ ४९ ॥

## ९६ षड्भुजा-खरबूजा ।

नामानि—षट्भुजा तु मधुफला षड्रेखा वृत्तकर्कटी । तिक्ता तिक्तफला चैव मधुपाका च षड्मुखा ॥ ५० ॥ वृतेर्वारुश्च संप्रोक्ता 'राजनामनिघण्टके' । खर्बुजं फलराजं स्यादमृताह्वं दशांगुलम् ॥५१॥ प्रोक्तं 'मदनपाले' तु वैद्यविद्याविशारदैः ।

गुणाः—खर्बुजं तर्पणं वृष्यं पुष्टिदं श्रमदाहहृत् ॥ ५२ ॥ मूत्रशुद्धिकरं चैव विषपित्तहरं तथा । उन्मादापहरं वीर्यवृद्धिदं कफदं 'नृपे' ॥ ५३ ॥ कोष्ठशुद्धिकरं बल्यं गुरुस्निग्धं च स्वादुकम् । शीतं पित्तानिलहरं प्रोक्तं 'मदनपालके' ॥ ३५४ ॥

## ९७ कर्कटी-ककरी ।

नामानि—कर्कटी तु कटुदला तथा छर्द्दापनी स्मृता । मूत्रफला पीतसा च त्रपुसी हस्तिपर्णिका ॥ ५५ ॥ मूत्रला लोमशकांडा बहुकण्टा तथा 'नृपे' । दीपनी स्फोटिनी चैव ततोनलविवर्द्धनी ॥ ५६ ॥ 'धन्वन्तरिनिघण्टे' तु शकटा गजकर्णिका । एर्वारुश्च तथा प्रोक्ता ऊर्वारुः 'कैयदेवके' ॥ ३५७ ॥

गुणाः—कर्कटी मधुरा शीता कफपित्तहरा ध्रुवम् । रक्तदोषकरा पक्वा बहुमूत्रकरी तथा ॥ ५८ ॥ मूत्ररोधाश्मरी हन्त्री पित्तवान्तिहरा ध्रुवम् । दाहश्लेष्महरा रुच्या प्रोक्ता 'राजनिघण्टके'

*इसका फल तरकारीवाले कुम्हड़ेसे छोटा होता है । इसका स्वाद आलूके शाकके समान होता है ।

॥ ३५६ ॥ पक्वा स्यात्पित्तकारी च वन्हिदा तृट्विनाशनी । श्रम-
दाहहरा प्रोक्ता 'कैयदेवनिघण्टके' ॥ ३६० ॥

## ९८ त्रपुसी-खीरा ।

नामानि—त्रपुसी तुन्दिलफला तथा त्रपुसकर्कटी । बहुफला कोशफला कण्टालुस्तदनन्तरम् ॥६१॥ पीतपुष्पी तथा प्रोक्ता 'राजनामनिघण्टके' । त्रपुसं कटुकं चैव विपांडुर्हस्तिपर्णिनी ॥६२॥ छर्याघ्नी मूत्रफला तर्कारी कटुका 'धने' । मूत्रला कण्टका चैव 'कैयदेवनिघण्टके' ॥ ६३ ॥

गुणाः—त्रपुसी मधुरा रुच्या शिशिरा भ्रमहा गुरुः । पित्तदाहहरा चैव वांतिहृत् मूत्रदा 'नृपे' ॥ ६४ ॥ मूत्रबस्तिशोधनिका कफपित्तास्रनाशनी । मूत्रकृच्छ्रविन्धघ्नी 'धन्वन्तरिनिघण्टके' ॥ ६५ ॥ कफवातकरा चैव 'द्रव्ये' प्रोक्ता भिषक्जनैः ।

## ९९ एर्वारु-बड़ी ककरी, फूटवाली ककरी ।

नामानि—एर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा ॥ ६६ ॥ स्थूला तोयच्छला चैव हस्तिदंतफला 'नृपे' । 'धन्वंतरौ' तु कविभिरुर्वारुः परिकीर्तिता ॥ ६७ ॥ मूत्रफलं वालुकं च प्रालम्बं 'कैयदेवके' ।

गुणाः—उर्वारुकं पित्तहरं शीतलं मूत्ररोगहृत् ॥ ६८ ॥ मधुरं रुचिदं चैव मूर्छासन्तापहारकं । वातकोपकरं प्रोक्तं वैद्यै 'राजनिघंटके' ॥६९॥ भेदी विष्टंभकारी च त्वभिष्यन्दी च मूत्रलम् । रक्तपित्तहरं चैव पक्वं स्यात्कफहारकं ॥ ७० ॥ हृद्यं दीपनमित्युक्तं 'कैयदेवनिघंटके' ।

## १०० वालुकी-सेंधिया ।

नामानि—वालुकी तु बहुफला संप्रोक्ता क्षेत्रकर्कटी ॥ ७१ ॥ तथा च मधुरफला क्षुद्रैर्वारुस्तथा मता । स्निग्धफला क्षेत्ररुहा कथिता पीतपुष्पिका ॥ ७२ ॥ शारदिका तथा ख्याता 'राजनामनिघंटके' ।

गुणाः—वालुकी मधुरा शीता हृद्याध्मानश्रमापहा ॥ ७३ ॥ कासपीनसकारी च पित्तहा रुचिदा 'नृपे' ।

## १०१ चिर्भिटा-गोरख ककरी, कचेलिया ।

नामानि—चिर्भिटा रोचनफला सुचित्रा क्षेत्रचिर्भिटा । चिर्भिटिका पांडुफला पथ्या चित्रफला मता । कर्कटी तु तथा प्रोक्ता 'राजनामनिघंटके' ॥७५॥ गोरक्षी चैव गोदुग्धं चिर्भिटी 'कैयदेवके' । धेनुदुग्धं 'द्रव्यरत्ने' तथा गोरक्षकर्कटी ॥ ७६ ॥ 'धन्वे' तु चिर्भटं चैव प्रोक्तं वैद्यविशारदैः ।

गुणाः—बाल्ये तिक्ता चिर्भटा किंचिदम्ला गौल्योपेता दीपनी सा च पाके । शुष्का रूक्षा श्लेष्मवातारुचिघ्नी जाड्यघ्नी वै रोचनी दीपनी च ॥ ७७ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यशास्त्रज्ञपंडितैः ॥ ७८ ॥ भेदिनी कृमिकंण्डुघ्नी ज्वरहा 'गणनामके' । रूक्षा गुरुः शीतला च ग्राही विष्टंभकारिणी ॥ ७९ ॥ वातप्रकोपना चैव कफपित्तविनाशिनी । । अभिष्यंदी तथा 'कैये' पक्वमुष्णं तु पित्तलं ॥ ८० ॥

## १०२ मृगाक्षी-सन्धिनी ।

नामानि—मृगाक्षी श्वेतपुष्पा च मृगेर्वारुर्मृगादनी । चित्रवल्ली बहुफला कपिलाक्षी मृगेक्षणा ॥ ८१ ॥ चित्रा चित्रफला पथ्या विचित्रा मृगचिर्भिटा । मरुजा कुंभसी देवी कट्फला लघुचिर्भटा ॥ ८२॥ सेन्द्रिनी च महादेवी 'राजनामनिघंटके' । सुखवासः शीर्शावृत्तं विचित्रं पांडुरं तथा ॥ ८३ ॥ विचित्रकं चित्रफलं 'कैयदेवनिघंटके' । तथा 'मदनपाले' तु संप्रोक्तं पीतवर्णकं ॥ ८४ ॥

गुणाः—मृगाक्षी कटुका तिक्ता पाकेम्ला वातनाशनी । पित्तकृत्पीनसहरा दीपनी रुचिदा 'मृपे' ॥ ८५ ॥ 'कैये' तु शीतला प्रोक्ता वन्हिकृ 'न्मदने' स्मृता ।

## १०३ चीना कर्कटिका-चिचड़ा, चीना ककरी ।

नामानि—चीनाकर्कटिका ज्ञेया बीजकर्कटिका तथा ॥ ८६ ॥ सुदीर्घा राजिलफला 'नृपे' कुलककर्कटी । चीनाकं चीनकं चीना 'कैयदेवनिघंटके' ॥ ८७ ॥

गुणाः—चीना कर्कटिका रुच्या शिशिरा पित्तनाशनी । मधुरा तृप्तिदा हृद्या दाहशोषहरा 'नृपे' ॥ ८८ ॥ 'कैये' तु वातकफकृत्प्रोक्ता वैद्यविचक्षणैः ।

## शशांडुली-एक प्रकारकी ककरी ।

नामानि—शशांडुली बहुफला तंडुली क्षेत्रसंभवा ॥ ८९ ॥ क्षुद्राऽम्ला लोमशफला धूम्रवृत्तफला 'नृपे' ।

गुणाः—शशांडुली तिक्तकटुः कटूम्ला कफनाशनी ॥ ९० ॥ पाकेम्ला दीपनी रुच्या जरठा मधुरा तथा । विदाहीति भिषक्श्रेष्ठैः प्रोक्ता राजनिघंटके' ॥ ३९१॥

## १०५ कटुहुंची-कडवंची ।

नामानि—कटुहुँची श्रीफलिका प्रतिपत्रफला तथा । सुषवी कारवी चैव तद्वद्बहुफला तथा ॥ ९२ ॥ क्षुद्रकारलिका प्रोक्ता ज्ञेया कन्दलता तथा । क्षुद्रादिकारवल्ली च प्रोक्ता 'राजनिघंटके' ॥ ९३ ॥ 'द्रव्ये' लघुलता चैव व्रणघ्नी कृष्णमृद्भवा ।

गुणाः—कटुहुंची कटुस्तिक्ता रक्तवातकरो तथा ॥ ९४ ॥ रोचनी दीपनी पथ्या 'राजनामनिघंटके' ।

## १०६ क्षुद्रकारलीकन्द-कडवंचीकन्द ।

गुणाः—कारलीकन्दमर्शोघ्नं मलरोधविशोधनं ॥३९५॥ योनिनिर्गतदोषघ्नं गर्भस्रावविषापहम् ॥२१२४॥

# ६ शाल्मल्यादिवर्गः ।

## १ शाल्मली—सेमर ।

नामानि—शालमलिश्चिरजीवी स्यात्पिच्छिलो रक्तपुष्पकः ॥१॥ कुक्कुटी तूलवृक्षश्च मोचाख्यः कंटकद्रुमः । रक्तोत्पलो रम्यपुष्पो बहुवीर्यो यमद्रुमः ॥ २ ॥ दीर्घद्रुमः स्थूलफलो दीर्घायू 'राजनामके' । पिच्छिला तूलिनी मोचा कंटकाढ्या सुपूरिणी ॥ ३ ॥ बहुवीर्यो तूलफला निस्सारा दीर्घपादपा । दुरारोहा रम्यपुष्पा रोचना च यमद्रुमः ॥ ४ ॥ शालमली रक्तपुष्पा च 'धन्वे' तु चिरजीविका । पिच्छा याम्यद्रुमश्चैव पूरणी स्थिरजीविका ॥ ५ ॥ नक्तपुष्पी तथा प्रोक्ता 'कैयदेवनिघण्टके' । तूलिका कुक्कुटी चैव तथैव चिरजीविनी ॥ ६ ॥ प्रोक्ता 'मदनपाले' तु भिषक्विद्याविशारदैः । रक्तशालमलिका 'द्रव्ये'

स्थिरायु'र्भावनामके' ॥ ७ ॥ तथा 'गणनिघण्टे' तु कुंकुमा स्थूलजीविका ।

गुणाः—शाल्मलिः पिच्छिलो वृष्यो बल्यो मधुरशीतला ॥ ८ ॥ कषायश्च लघुः स्निग्धः शुक्रश्लेष्मविवर्द्धनः । तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः ॥ ९ ॥ पुष्पं तद्वच्च निर्दिष्टं फलं तस्य तथाविधं । प्रोक्तं 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ १० ॥ रसायनवरा चैव बृंहणी रक्तपित्तजित् । तत्फलं ग्राहि पित्तघ्नं प्रोक्तं 'मदनपालके' ॥ ११ ॥ तत्पुष्पं कफपित्तघ्नं वातलं 'कैयदेवके' । 'गणे' तु योनिदोषघ्नं संप्रोक्तं वैद्यनायकैः ॥ १२ ॥

## २ मोचरस ।

नामानि—मोचो मोचरसो मोचसारः शाल्मलिवेष्टकः । सुरसः पिच्छलसारो मोचनिर्यास इत्यपि ॥ १३ ॥ मोचस्रावस्तथा प्रोक्तो 'राजनामनिघण्टके' । निर्यासः शाल्मलेः पिच्छस्तथा शाल्मल इत्यपि ॥ १४ ॥ तथा वेश्मरसश्चैव 'धन्वनामनिघण्टके' । मोचकः 'कैयदेवे' तु वेष्टको 'द्रव्यनामके' ॥ १५ ॥ मोचस्रावी यथा पिच्छा प्रोक्ता 'मदनपालके' । पिच्छलश्च तथा प्रोक्तो 'गणनामनिघण्टके' ॥ १६ ॥

गुणाः—अथ मोचरसः प्रोक्तः कषायः कफवातहा । बलप्रभाववर्णवीर्यपुष्टिसिद्धिप्रदायकः ॥ १७ ॥ आयुर्वृद्धिकरो ग्राही प्रोक्तो 'राजनिघण्टके' । प्रवाहिकातिसारघ्नो स्निग्धो ह्यामविनाशिनी ॥ १८ ॥ कफपित्तहरः प्रोक्तो 'कैयदेवनिघंटके' । 'मदने' रक्तपित्तघ्नो दाहहा परिकीर्तितः ॥ १९ ॥

## ३ रक्तरोहितक—रक्तरोहिडा ।

नामानि—रोहीतको रोहितक रोहितश्च कुशाल्मलिः । सदाप्रसूनश्च कूटशाल्मलिश्च विरोचनः ॥ २० ॥ शाल्मलिको 'नृपे' प्रोक्ता तथा दाडिमपुष्पकः । रोचनश्च तथा रोही,'धन्वन्तरिनिघण्टके' ॥२१॥ दाडिमपत्रः प्लीहघ्नो रोहिणो 'गणनामके' । तत'स्त्वमरकोशे' तु प्लीहशत्रुः स्मृतो बुधैः ॥ २२ ॥ रक्तस्तु रक्तपुष्पश्च रक्तघ्नः पारिजातकः । 'कैयदेवनिघण्टे' तु प्रोक्तो वैद्यविशारदैः ॥ २३ ॥

## ४ श्वेतरोहितक—श्वेत रोहिडा ।

नामानि—'नृपे' तु श्वेतरोहीतः सितपुष्पः सिताह्वयः । सि-

सांगः शुक्ररोहीतो लक्ष्मीवाञ्जनवल्लभः ॥ २४ ॥

गुणाः—'नृपे' रोहीतकद्वंद्वं कटु स्निग्धं कषायकं । शीतलं कृमिप्लीहघ्नं व्रणरक्ताक्षिरोगहं ॥ २५ ॥ 'धन्वे' प्रोक्तो यकृद्धा च तथा 'कैयनिघण्टके'। सरो वातकफघ्नश्च चोष्णो गुल्मविषापहः ॥ २६ ॥ मेदोविबन्धानाहघ्नो कर्णशूलविनाशनः ।

## ५ एकवीर ।

नामानि—एकवीरो महावीरः सकृद्वीरः सुवीरकः ॥ २७ ॥ एकादिवीरपर्यायैर्वीरः प्रोक्तो 'नृपे' तथा ।

गुणाः—एकवीरो भवेच्चोष्णः कटुकस्तोदवातनुत् ॥ २८ ॥ गृध्रसीकटिपृष्ठादिशूलपक्षाभिघातनुत् ।

## ६ पारिभद्र—फरहद ।

नामानि—पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः ॥ २९ ॥ बहुपुष्पो रक्तपुष्पः कृमिघ्नो रक्तकेसरः । 'नृपे' प्रोक्तो तथा 'कैये' प्रभद्रः कंटकीशुकः ॥ ३० ॥ पारिजातः कंटकी च कंटकीपारिजातकः ।

गुणाः—पारिभद्रः कट्वम्लश्च कफवातविनाशनः ॥ ३१ ॥ रोचनो दीपनः पथ्यो प्रोक्तो 'राजनिघण्टके' । शोफपांडुक्रिमिहरो मेहोहा 'मदने' तथा ॥ ३२ ॥ पुष्पं तु पित्तरोगघ्नं कर्णव्याधिविनाशनं । 'भावे' तु पूर्वमुक्तं स्या'द्रणे' च व्रणशोथजित् ॥ ३३ ॥ कफपित्तहरं चैव संप्रोक्तं वैद्यनायकैः ।

## ७ खदिर—खैर ।

नामानि—खदिरो बालपत्रश्च खाद्य (द्य) पत्री क्षतक्षमः ॥३४॥ सुशल्यो वक्रकंटश्च यज्ञांगो दन्तधावनः । गायत्री जिह्मशल्यश्च कंठीसारद्रुमस्तथा ॥ ३५ ॥ कुष्ठारिर्बहुसारश्च मेध्यश्च 'नृपनामके' । 'कैयदेवे' तु गीतश्च कुष्ठघ्नः कुष्ठकंटकः ॥ ३६ ॥ 'केशे' तु बालतनयस्तथा च दन्तधावनः ।

गुणाः—सामान्यखदिरश्चैव रसे तिक्तस्तु शीतलः ॥ ३७ ॥ पित्तादिकफकुष्ठघ्नो पाचनः कासशोफहा ।

## ८ श्वेतखदिर-सफेदखैर ।

नामानि—खदिरः श्वेतसारश्च कार्मुकः कुब्जकण्टकः ॥ ३८ ॥ सोमसारो नेमिवृक्षः सोमवल्कः पथिद्रुमः । प्रोक्तो 'राजनिघण्टे' तु वैद्यशास्त्रविशारदैः ॥३८॥ सारशल्यस्तथा प्रोक्तो 'कैयदेवनिघंटके'।

गुणाः—ततस्तु श्वेतखदिरस्तिक्तः काषायकः कटुः ॥ ४० ॥ चोष्णः कण्डूकुष्ठहरः कफवातविनाशनः । व्रणापहेति संप्रोक्तो 'राजनामनिघण्टके' ॥ ४१ ॥ शीतपित्तकफघ्नश्च रक्तदोषहरो 'धने' । शीतः कफादिपित्तघ्नो श्वित्रकुष्ठकृमिघ्नकः ॥ ४० ॥ शोथप्रमेहमेदोघ्नः कासारुचिविनिघ्नकः । पांडुहा 'कैयदेवे' च संप्रोक्तो वैद्यनायकैः ॥ ४३ ॥ मेहशोथामपित्तासृक्नाशनो 'मदने' स्मृतः ।

## ९ रक्तखैर–लालखैर ।

नामानि—रक्तसारस्तु रक्तश्च सुसारस्ताम्रकण्टकः ॥ ४४ ॥ संप्रोक्तो वहुशल्यश्च याज्ञिकः कुष्ठतोदनः । यूपद्रुमोऽस्त्रखदिरोप्यरुश्च 'राजनामके' ॥ ४५ ॥

गुणाः—कटूष्णो रक्तखदिरः कषायो गुरुतिक्तकः । आमवातास्रवातघ्नो व्रणभूतज्वरापहः ॥ ४६ ॥ 'नृपे' प्रोक्तो तथा 'धन्वे' हिमः पित्तकफघ्नकः । कुष्ठकण्डूकृमिघ्नश्च कफरेतविशोषकः ॥४७॥ शुक्रवृद्धिकरो 'द्रव्ये' दाहज्वरविनाशनः । तन्निर्यासगुणश्चैव मधुरो बलकृत्तथा ॥ ४८ ॥ वीर्यवृद्धिकरश्चैव मुखरोगविनाशनः ।

## १० विट्खदिर-दुर्गन्धखैर ।

नामानि—ततोविट्खदिरश्चैव कांभोजी कालकन्धकः ॥ ४६ ॥ गोरटो मरुजश्चैव संसारो वहुसारकः । पत्रतरुर्महासारः खादिरो 'राजनामके' ॥ ५० ॥ इरिमेदोरिमेदश्च प्रोक्तो 'मदनपालके' ।

गुणाः—विट्खदिरः फटुरुष्णस्तिक्तो रक्तव्रणोत्थदोषहरः ॥५१॥ कण्डूतिविषवीसर्पज्वरकुष्ठोन्मादभूतघ्नः ।

## ११ आरि-वल्लीखैर ।

नामानि—आरिः सन्दानिका दाला तथा खदिरपत्रिका ॥५२॥ प्रोक्ता 'राजनिघण्टे' तु वेदसंख्या भिषक्जनैः ।

गुणाः—आरिः कषायकटुका तिक्ता रक्तार्तिपित्तनुत् ॥ ५३ ॥

## १२ खदिरसार-खैरसार ।

नामानि—खादिरः खदिरोद्भूतस्तथा खदिरसारकः । 'नृपे' खदिरनिर्यासो रङ्गदो रङ्ग एव च ॥ ५४ ॥

गुणाः—कटुकः खादिरः सारस्तिक्तोष्णः कफवातहृत् । व्रण-कण्ठामयघ्नश्च रुचिकृद्दीपनो 'नृपे' ॥ ५५ ॥ 'द्रव्यरत्ने' त्रिदोषघ्नः संप्रोक्तो वैद्यनायकैः ।

## १३ शमी ।

नामानि—शमी शान्ता शिवेशाना तुङ्गेष्टा सुरभिस्तथा ॥ ५६ ॥ कचशत्रुफला चैव शापापशमनी तथा । सुभद्रा केशमथनी लक्ष्मीः क्षुभकरी मता ॥ ५७ ॥ मेध्या तपनतनया हविर्गन्धा तथा स्मृता । मङ्गल्या शंकुफलिका पापापशमनी तथा ॥ ५८ ॥ भद्रा तु शङ्करी ज्ञेया केशहन्त्री शिवाफला । सुपत्रा सुखदा चैव 'राजनामनिघ-ण्टके' ॥ ५९ ॥ ईशानी शङ्करी चैव 'धन्वे' तु पापनाशिनी । केशहन्तृ-फला चैव केशहृत्फलिका तथा ॥ ६० ॥ केशापहा शाकफला 'कैय-देवनिघण्टके' । 'द्रव्ये' सक्तुफला चैव शाङ्करी मङ्गलप्रदा ॥ ६१ ॥ शिंबी खदिरपत्रा च पवित्रा 'मदने' 'शिवे' । पवित्रपत्रा शमिका शुक्लफला तथा 'गणे' ॥ ६२ ॥

गुणाः—शमी रूक्षा कषाया च रक्तपित्तातिसारजित् । तत्फलं तु गुरु स्वादुतिक्तोष्णं केशहृ 'नृपे' ॥ ६३ ॥ 'द्रव्ये' तु शीतं 'कैये' च कफकुष्ठार्शनाशनम् । श्वासकासकृमिभ्रान्तिनाशनं लघु रेच-कृत् ॥ ६४ ॥

## १४ लघुशमी ।

नामानि—शमी शान्ता शुभा भद्रा जया चैवापराजिता । विजया तु 'नृपे' प्रोक्ता पूर्वोक्तगुणसंयुता ॥ ६५ ॥ ईशान त्वजिता 'कैये' भूशमी 'मदने' स्मृता । तत'स्त्वमरकोशे' तु शमीरः परि-कीर्तितः ॥ ६६ ॥

## १५ बब्बुल-बबूल ।

नामानि—बब्बुलो युगलाक्षश्च कण्टालुस्तीक्ष्णकण्टकः । गोशृङ्गः पंक्तिबीजश्च दीर्घकण्टः कफान्तकः ॥ ६७ ॥ दृढबीजोज-

भक्षश्च दर्बुरो 'राजनामके'। किंकिराटपीतकश्च 'द्रव्ये' तु पीत-पुष्पकः ॥ ६८ ॥ किंकिराटस्तथा प्रोक्तो 'भावनामनिघण्टके'।

गुणाः—बब्बुलस्तु कषायोष्णः कफकासक्षयापहः ॥ ६९ ॥ आम-रक्तातिसारघ्नः पित्तदाहहरो 'नृपे'। 'द्रव्ये' 'मदे' शीतलश्च भेदी कुष्ठगरापहः ॥ ७० ॥

## १६ जालबब्बूलकः-जाल बबूल।

नामानि—जालबब्बूलकश्चैव छत्राकः स्थूलकंटकः ॥ ७१ ॥ सूक्ष्मशाखस्तनुच्छायो रन्ध्रकंटस्तु 'राजके'।

गुणाः—जालबब्बूलको रूक्षो वातामयविनाशकृत् ॥ ७२ ॥ पित्तकृच्च कषायोष्णः कफहृद्दाहकारकः।

## १७ अरिमेद-हिंवर।

नामानि—इरिमेदोरिमेदश्च गोधास्कन्धोरिमेदकः ॥ ७३ ॥ अ-हिमेदोहिमारश्च पूतिमेदोहिमेदकः। प्रोक्तो 'राजनिघंटे' तु 'कैयदेवे' रिभस्तथा ॥७४॥ विट्खदिरः सर्पमेदो मेदोरिपुररिस्तथा। खरिभो 'द्रव्यरत्ने' तु कालस्कन्धो 'मदे' तथा ॥७५॥ पुष्पारिश्च तथा प्रोक्तो 'गणनामनिघण्टके'।

गुणाः—अरिमेदः कषायोष्णस्तिक्तो भूतविनाशकः ॥७६॥ शोफा-तिसारकासघ्नो विसर्पविषहा 'नृपे'। कृमिव्रणादिदंतास्रक्नाशनो 'मदने' स्मृतः ॥७७॥ प्रमेहमेदहा प्रोक्तो 'वैद्यै र्गणनिघंटके'। 'धन्वे' तु मुखरोगघ्नो रक्तवैकारहृद्धिमः ॥ ७८ ॥ 'कैये' तु कृमिकंडूतीव-स्तिरोगादिनाशनः। दन्तरोगहरः प्रोक्तो वैद्यविद्याविशारदैः ॥ ७९ ॥ 'द्रव्ये' तु दाहहृत्प्रोक्तो 'भावे' तु ग्रहभीतिहा।

## १८ पखौड-पखौंडा।

नामानि—पखौडः पंचकृत्पंचवर्धनः पंचरक्षकः ॥ ८० ॥ प्रोक्तो 'राजनिघंटे' तु पत्तरो 'द्रव्यनामके'। पक्वांडः पक्तपौडश्च प्रोक्तो वैद्यविशारदैः ॥ ८१ ॥

गुणाः—हस्तांजनविधौ शस्तः कटुजीर्णज्वरापहः।'नृपे' प्रोक्तो तथा 'द्रव्ये' शीतपित्तहरः स्मृतः ॥ ८२ ॥

## १९ इंगुदी – हिंगोट, इंगुवा ।

नामानि—इंगुदी हिंगुपत्रश्च विषकंटोनिलांतकः। गौरस्तूक्तः सुपत्रश्च शूलारिस्तापसद्रुमः। तथा क्रोष्ठुफलश्चैव 'राजनामनिघंटके' ॥८३॥ इंगुदो भल्लकस्तिक्तो तिंगुदो पूतिकण्टकः। कंटकागारवृक्षश्च कोरको वृक्ष एव च ॥ ८४ ॥ व्यवहारिस्तिक्तमज्जः 'केयदेवनिघंटके'। 'द्रव्ये' तु तापसतरुर्वृद्धकंटक एव च ॥ ८५ ॥ इंगुलो 'मदने' प्रोक्तो तिल्वको 'गणनामके'।

गुणाः—इंगुदी मदगन्धी स्यात्कटूष्णाफेनिला लघुः ॥ ८६ ॥ रसायनी जंतुवातकफव्रणहरी 'नृपे'। लूताविषघ्नी संप्रोक्ता वैद्यैः 'मदनपालके' ॥ ८७ ॥ पाके कटुः कृमिघ्नी च श्वित्रकुष्ठग्रहापहा। विषशूलहरा चैव प्रोक्ता 'केयनिघंटके' ॥ ८८ ॥ तत्फलं कफवातघ्नं चोष्णं 'भावप्रकाशके'।

## २० करीरः–करील ।

नामानि—निष्पत्रकः करीरश्च करिरं ग्रथिलस्तथा ॥ ८९ ॥ क्रकरो गुडपत्रश्च करकस्तीक्ष्णकण्टकः। प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ९० ॥ शाकपुष्पो मृदुफलः क्रकचस्तीक्ष्णसारकः। प्रोक्तो 'धन्वनिघंटे' तु तथा 'केयनिघंटके' ॥ ९१ ॥ करीरकस्तीक्ष्णवृक्षः सुफलश्च हुताशनः। निष्पत्रिका 'द्रव्यरत्ने' क्रकरो 'मदनपालके' ९२ ॥ अपत्रा चैव कथिता 'भावनामनिघण्टके'।

गुणाः—निष्पत्रिकाध्मानकरा कषाया च कटूष्णका ॥ ९३ ॥ कफकारी श्वासहंत्री बातारुचिविनाशनी। शूलच्छर्दिखर्जुव्रणनाशिनी 'राजनामके' ॥ ९४ ॥ 'द्रव्ये' बलासहा प्रोक्ता 'धन्वे' तु गुदकीलहा। कटुतीक्ष्णश्लेष्महा च दुर्नामकफवातहा ॥ ९५ ॥ विषशोफाममेदघ्नी तत्पुष्पं तु त्रिदोषहृत्। फलं तूष्णं विकाशी च रूक्षं च कफपित्तजित् ॥ ९६ ॥ संग्राहीति भिषक्श्रेष्ठैः प्रोक्तं 'केयनिघंटके'।

## २१ स्नुही–सेंहुड ।

नामानि—स्नुही सुधा महावृक्षः क्षीरी निस्त्रिंशपत्रिका ॥ ९७॥ शाखाकण्टश्च गुडाख्यः सेहुँडो वज्रकण्टकः। बहुशाखो वज्रवृक्षो

वातारिः क्षीरकांडकः ॥९८॥ भद्रो व्याघ्रनखश्चैव नेत्रारिर्दण्डवृक्षकः । समंतदुग्धो गण्डीरः स्नुक् चेति 'राजनामके' ॥ ९९ ॥ बहुस्रावः 'कैयदेवे' कुलिशद्रुम एव च । वज्रो वज्री वज्रतुंडो 'द्रव्ये' महातरुस्तथा ॥ १०० ॥ 'भावे' समन्तदुग्धा च सिहुंडः सिंहतुंडकः । वज्रद्रुमस्तथा प्रोक्तो वैद्यविद्याविशारदैः ॥ १०१ ॥

गुणाः—स्नुहिरुष्णा पित्तदाहकुष्ठवातप्रमेहनुत् । क्षीरं वातविषाध्मानगुल्मोदरहरं 'नृपे' ॥ १०२ ॥ वांतिरेचनकृत्प्रोक्तो 'द्रव्यनामनिघंटके' । कटुतिक्तस्तीक्ष्णकश्च दीपनो गुरु रोचनः ॥ ३ ॥ वातशूलामहृच्चैव कफोन्मादशशोफहा । शोकपांडुव्रणघ्नश्च मेदोदूषीविषघ्नकः ॥ ४ ॥ अष्ठीलाहाश्मरीहेति प्रोक्तो 'मदनपालके' ।

## २२ त्रिधार–तिधारी सेहुंड़ ।

नामानि—त्रिधारा च स्नुही प्रोक्ता तिस्रोधारा तु 'राजके' ॥५॥
गुणाः—पूर्वोक्तगुणवत्येषा विशेषाद्रससिद्धिदा ।

## २३ कंथारी–नागफनी ।

नामानि—कंथारी कन्थरी कंथा दुर्धर्षा तीक्ष्णकण्टका ॥ ६ ॥ तीक्ष्णगन्धा क्रूरगन्धा दुष्प्रवेशा तथा 'नृपे' । क्रूरकर्मा त्वहिंस्रा च तथैव चक्रवल्लरी ॥ ७ ॥ कपालकुकुलिकाम्लफला 'कैयदेवनिघण्टके' ।

गुणाः—कंथारी कटु तिक्तोष्णा कफवातनिकृंतनी ॥ ८ ॥ शोफघ्नी दीपनी रूच्या रक्तग्रन्थिहरा 'नृपे' ।

## २४ श्वेत एरंड-सफेद एरण्ड ।

नामानि—श्वेतैरंडः सितैरंडश्चित्रो गन्धर्वहस्तकः ॥ ९ ॥ आमंडस्तरुणः शुक्लो वातारिर्दीर्घदंडकः । पंचांगुलो वर्धमानो रुबुको 'राजनामके' ॥ १० ॥ एरंडको यक्षहस्तो रुबुरुत्तानपत्रकः । गन्धर्वो व्याघ्रपुच्छश्च शुक्लः 'कैयनिघंटके' ॥ ११ ॥ 'भावे' व्यडम्बकामण्डश्चोरुबूको व्यडम्बनः ।

गुणाः—श्वेतैरंडः कटुस्तिक्तश्चोष्णः कफज्वरपहः ॥ १२ ॥ रसार्हो वायुनिघ्नश्च कासहा 'राजनामके' । मधुरूष्णो गुरुश्चैव रेचकारी च कुष्ठहा ॥ १३ ॥ श्वासकासाश्मरीगुल्मप्लीहोदरविनाशनः ।

वध्मानाहकटीबस्तिरोगहा मेहनाशनः ।। १४ ।। शिरोरोगामहृच्चैव प्रोक्तो 'राजनिघंटके' । तत्पत्रं वातनिघ्नं च कफक्रमिविनाशनं ।। १५ ।। गुल्मवातहरं प्रोक्तं 'भावनामनिघण्टके' ।

## २५ रक्तएरंड–लालएरण्ड ।

नामानि—रक्तैरंडस्तथा व्याघ्रो हस्तिकर्णो रुबुस्तथा ।। १६ ।। उरुबूको नागकर्णश्चंचुरुत्तानपत्रकः । करपर्णो पञ्चनखः स्निग्धो व्याघ्रदलस्तथा ।। १७ ।। चित्रबीजो व्याघ्रकरो ह्रस्वैरण्डस्तु 'राजके' । एरंडको हस्तपर्णो मंडो लोहितशीर्षकः ।। १८ ।। व्याडंवा 'कैयदेवे' तु 'मदने' चंचुलस्तथा । व्याघ्रतरुर्वस्तवैरिः प्रोक्तो वैद्यविशारदैः ।। १९ ।। व्याघ्रतलो व्याघ्रपुच्छस्त्विभकर्णश्च 'द्रव्यके' ।

गुणाः—रक्तैरंडः श्वयथुहा वायुरक्तार्तिपांडुहा ।। २० ।। भ्रांतिश्वासज्वरघ्नश्च रेचको 'राजनामके' । वातरक्तहरश्चैव 'कैयदेवनिघंटके' ।। २१ ।। शूलशोफहरश्चैव तत्फलं मेदवातहृत् । 'द्रव्ये' तु पार्श्वशूलघ्नं प्रोक्तं वैद्यविचक्षणैः ।। २२ ।। आममारुतहृच्चैव फलमत्युष्णदायकं । गुल्मशूलानिलहरं यकृत्प्लीहोदरार्शोहृत् ।। २३ ।। कटुका दीपनी मज्जा मलभेदकरी मता । वातश्लेष्मोदरघ्नीति प्रोक्ता 'भावप्रकाशके' ।। २४ ।।

## २६ स्थूलैरंड–बड़ाएरण्ड ।

नामानि—स्थूलैरंडो महैरंडो महापंचांगुली 'नृपे' ।

गुणाः—स्थूलैरंडो गुणाढ्यः स्याद्रसवीर्यविपक्तिषु ।। २५ ।।

## २७ घोंटी–घोंटी ।

नामानि—घोंटा बदरिका घोटी गोलिका शत्रुकंटकः । कर्कटी च तुरंगी च तुरगा 'राजनामके' ।। २६ ।।

गुणाः—घोटिका कटुकोष्णा च मधुरा वातनाशनी । व्रणकंडूतिकुष्ठासृग्दोषश्वयथुहा 'नृपे' ।। २७ ।।

## २८ लताकरंज–कञ्जा ।

नामानि—लताकरंजो दुस्पर्शो वीरास्यो वज्रबीजकः । धनदाक्षः कंटफलः कुबेराक्षश्च 'राजके' ।। २८ ।। गदघ्नस्तिरिगिच्छिको 'द्रव्यरत्नाकरे' तथा ।

गुणाः—लताकरंजपत्रं तु कटूष्णं कफवातनुत् ॥ २८ ॥ तद्बीजं दीपनं पथ्यं शूलगुल्महरं 'नृपे'।

## २९ कारी ।

नामानि—कारी तु कारिका कार्या गिरिजा कटुपत्रिका ॥३०॥ तत्रैका कंटकारी स्यादन्या त्वाकर्षकारिका ।

गुणाः—कारी कषायमधुरा द्विविधा पित्तनाशनी ॥ ३१ ॥ दीपनी ग्राहिणी रुच्या कंठशोधकरी गुरुः ।

## ३० मदन-मैनफल ।

नामानि—मदनः शल्यः कैटर्यः पिंडी धाराफलस्तथा ॥ ३२ ॥ तगरः करहाटश्च राठः पिंडीतकस्तथा । कंटालो विषमुष्टिश्च छर्दनो विषपुष्पकः ॥ ३३ ॥ घंटालो मादनो हर्ष्यो घंटाख्यो बस्तिशोधनः । ग्रन्थिफलो गोलफलो मदनाव्हश्च 'राजके' ॥ ३४ ॥ 'धन्वे' विषमुष्ककश्च गालवः शल्यकः फलः । मरुबकश्च श्वसनो मातुलो बीजपुष्पकः ॥ ३५ ॥ 'कैयदेवे' तथा 'द्रव्ये' गालो गालफलःस्मृता ।

गुणाः—मदनः कटुतिक्तोष्णः कफवातव्रणापहः ॥ ३६ ॥ शोफहा वांतिकारी च प्रोक्ता 'राजनिघंटके'। लेखनो लघु रुक्षश्च प्रतिश्यायज्वरघ्नकः ॥ ३७ ॥ कुष्ठार्शोविद्रधिहरः प्रोक्तः 'कैयनिघंटके'। आनाहगुल्मनिघ्नश्च प्रोक्तो 'द्रव्ये' भिषग्जनैः ॥ ३८ ॥

## ३१ महापिण्डीतक-बड़ामैनफल ।

नामानि—वाराहोऽन्यः कृष्णवर्णो महापिंडीतको महान् । स्निग्धपिंडीतकश्चान्यः स्थूलवृक्षफलो 'नृपे' ॥ ३९ ॥ गन्धपिंडीरकश्चैव प्रोक्तो 'कैयनिघंटके'। तथा 'कैये' पीतके तु स्नेहपिंडीतकः स्मृता ॥ ४० ॥ कुरंटकस्तथा श्वेते श्वेतपिंडीतकः स्मृतः । चर्मकारतरुश्चैव चर्मद्रुस्तीक्ष्णकीलकः ॥ ४१ ॥

गुणाः—'नृपे' तथान्यो* मदनः कटुतिक्तरसान्वितः । छर्दनः कफहृद्रोग पक्वाशय शोधनः ॥ ४२ ॥

---

*यहां 'अन्यो' शब्दसे बड़ा मैनफल, काला मैनफल, पीला मैनफल और सफेद मैनफलके गुण समझना चाहिये ।

## ३२ वेल्लतर–वरवेल ।

नामानि—वेल्लतरो वीरतरुः क्षुधाकुशलसंज्ञकः । दीर्घमूलो वीरवृक्षः कृच्छ्रारि 'राजनामके' ॥ ४३ ॥ तथाऽरुणाऽसितश्वेतनील-लोहितपुष्पकः । शमीपत्रो सूक्ष्मपत्रो तथा वेल्लन्तरः स्मृतः ॥ ४४ ॥ स्याज्जातितुल्यकुसुमः कण्टकी विजलदेशजः । प्रोक्ता 'भावप्रकाशे' तु तथा 'कैयनिघण्टके' ॥ ४५ ॥ बहुधारो बृहद्वासो दीर्घपत्रो-श्मकृच्छ्रहा । 'द्रव्यरत्ने' ग्रन्थिपर्णी वीरद्रुर्वीरपादपः ॥ ४६ ॥ बहु-वारो वेलतूरो बहुमूलो 'मदे' 'गणे' ।

गुणाः—वेल्लन्तरः कटूष्णश्च कृच्छ्रघ्नः सन्धिशूलनुत् ॥ ४७ ॥ वन्हिदीप्तिकरः पथ्यो वातघ्नो 'राजनामके' । तृष्णाकफापहश्चैव मूत्राघातश्मरीघ्नकः ॥ ४८ ॥ ग्राही च योनिसूत्रघ्नः 'कैयदेवनिघ-ण्टके' । भ्रंशहेति 'गणे' प्रोक्तः प्राचीनभिषजांवरैः ॥ ४९ ॥

## ३३ तरटी ।

नामानि—तरटी तारटी तीव्रा वर्बुरा रक्तबीजका ।

गुणाः—'नृपे' तु तिक्तमधुरा गुरुवल्या कफापहा ॥ ५० ॥

## ३४ श्रीवल्ली–सीकाकाई ।

नामानि—श्रीवल्ली शिववल्ली च कण्टवल्ली च शीतला । अम्ला कटुफलाऽश्वत्था दुरारोहा 'नृपे' तथा ॥ ५१ ॥

गुणाः—श्रीवल्ली कटुकाम्ला च वातशोफकफापहा । तत्फलं तैललेपघ्नमत्यम्लं रुचिकृत् 'नृपे' ॥ ५२ ॥

## ३५ निकुञ्जिका–सीकाकाईभेद ।

नामानि—अन्या निकुञ्जिकाऽम्लाख्या कुञ्जिका कुञ्जवल्लरी ।

गुणाः—निकुञ्जिका 'नृपे' प्रोक्ता श्रीवल्लीसदृशी गुणैः ॥ ५३ ॥

## ३६ अपर्वदण्ड–रामबाण ।

नामानि—अपर्वदण्डो दीर्घश्च रामबाणो नृपप्रियः । रामकांडो रामशरो रामस्येषुश्च 'राजके' ॥ ५४ ॥

गुणाः—रामकांडजमूलं स्यादीषदुष्णं रुचिप्रदम् । रसे चाम्लं कषायं च पित्तकृत्कफवातहृत् ॥ ५५ ॥

## ३७ यावनालशर–रामबाणभेद ।

नामानि—यावनालोऽथ नदिजो दृढत्वग्वारिसम्भवः । यावनालनिभश्चैव खरपत्रस्तु 'राजके' । ॥ ५६ ॥

गुणाः—यावनालशरंमूलमीषन्मधुरंरुच्यकम् । शीतं पित्ततृषापघ्नं पशूनामबलप्रदम् ॥ ५७ ॥

## ३८ शर–सरपत ।

नामानि—शरो बाण इषुः कांड उत्कटः सायकः क्षुरः । इक्षुरः क्षुरिकापत्रो विशिखश्च ततः स्मृतः ॥ ५८ ॥ प्रोक्तो 'राजनिघण्टे' तु तथा 'भावप्रकाशके' । भद्रमुंजस्तेजनश्च तथेक्षुवेष्टलः स्मृतः ॥ ५९ ॥

## ३९ स्थूलशर–बड़ासरपत ।

नामानि—महाशरः स्थूलशरो दीर्घमूलक एव च । क्षुरपत्रश्चेक्षुरकः संप्रोक्तो स्थूलसायकः ॥ ६० ॥ बहुमूलो 'नृपे' चैव वैद्यविद्याविशारदैः ।

गुणाः—शरद्वयं तु मधुरं तिक्तं कफविनाशनम् ॥ १६१ ॥ मदभ्रान्तिहरं चैव बल्यं वीर्यकरं ध्रुवम् । किञ्चिद्वातकरं प्रोक्तं वैद्यै 'राजनिघण्टके' ॥ ६२ ॥ कफवातहरं चैव शीतवीर्यं च शोषहम् । दाहच्छर्दिहरं प्रोक्तं वैद्यै 'गणनिघण्टके' ॥ ६३ ॥

## ४० मुञ्ज–मुञ्जतृण ।

नामानि—मुञ्जो मौंजीतृणाख्यः स्याद्ब्रह्मण्यस्तेजनाह्वयः । वानीरजो मुञ्जनकः शारी दर्भाह्वयस्तथा ॥ ६४ ॥ दूरमूलो दृढतृणो दृढमूलो बहुप्रजः । रञ्जनः शत्रुभङ्गश्च 'राजनामनिघण्टके' ॥ ६५ ॥ क्षुरस्तु स्थूलदर्भश्च बाणाह्वो ब्रह्ममेखलः । प्रोक्तो 'धन्वनिघण्टे' तु तथा 'भावे' सुमेखलः ॥ ६६ ॥

गुणाः—मुंजस्तु मधुरः शीतः कफपित्तजदोषजित् । ग्रहरक्षासु दीक्षासु भूतघ्नः पावनो 'नृपे' ॥ ६७ ॥ चोष्णं वीसर्पमूत्रघ्नं बस्त्यक्षिरोगहा 'धने' । 'द्रव्ये' तु दाहहा प्रोक्तो वैद्यविद्याविशारदैः ॥६८॥

## ४१ काश–कांसा ।

नामानि—काशः कांडेक्षुरिक्ष्वारिः काकेक्षुर्वायसेक्षुकः । इक्षुरश्चेक्षुकांडश्च शारदः सितपुष्पकः ॥ ६९ ॥ नादेयो दर्भपत्रश्च

लेखनी कांडकांडकः । कण्टालङ्कारकश्चैव 'राजनामनिघण्टके'॥७०॥ सुकांडश्च तथा प्रोक्तो वैद्यै 'र्मदनपालके' ।

गुणाः—काशश्च शिशिरो गौल्यो रुचिकृत् पित्तदाहनुत् ॥७१॥ तर्पणो बलकृद्वृष्यः श्रमशोषक्षयापहः । प्रोक्तो 'राजनिघंटे' तु वैद्यविद्याविशारदैः ॥ ७२ ॥ कृच्छ्राश्मरी दाहरक्तपित्तक्षयहरो 'मदे' । तृषाहा मूत्ररोधघ्नो वातपित्तघ्नको 'गणे' ॥ ७३ ॥

## ४२ मिशी—छोटाकांस ।

नामानि—अन्यो शिरी मिशी गुण्डा अश्वालो नीरजः शरः । प्रोक्तो 'राजनिघंटे' तु इक्षुगन्धा च 'भावके' ॥ ७४ ॥ तथा चेक्षुरसश्चैव वैद्यविद्याविशारदैः । श्वेतचामरपुष्पश्च तथेक्षुकुसुमो 'धने' ॥ ७५ ॥ काशेक्षुस्तु 'मदे' चैव सुकांडः श्वेतचामरः ।

गुणाः—मिशी मधुरशीता च पित्तदाहक्षयापहा ॥ ७६ ॥

## ४३ सितदर्भ—श्वेतदर्भ, कुशी ।

नामानि—सितदर्भो ह्रस्वकुशः पूतो यज्ञियपत्रकः । वज्रो ब्रह्मपवित्रश्च तीक्ष्णो यज्ञस्य भूषणः ॥ ७७ ॥ सूचीमुखः पुण्यतृणो वन्हिपूतस्तृणो 'नृपे' । मृदुदर्भः कुशो बर्हिः शुचिचीरः सुवृत्तकः ॥७८॥ 'धन्वन्तरिनिघंटे' तु संप्रोक्तो भिषजांवरैः । कुशं कुथः पवित्रं च दर्भ 'श्चामरकोशके' ॥ ७९ ॥ 'द्रव्यरत्नाकरे' चैव सूच्यग्रः परिकीर्तितः । श्वेतपत्रः श्वेतदर्भो याज्ञेयः क्षुद्रपत्रकः ॥ ८० ॥ प्रोक्तो 'गणनिघंटे' तु वैद्यविद्याविशारदैः ।

गुणाः—दर्भमूलं हिमं रुच्यं मधुरं पित्तनाशनं ॥ ८१ ॥ रक्तज्वरतृषाश्वासकामलानाशनं 'नृपे' । रक्तपित्तप्रशमनं मूत्रकृच्छ्रहरं 'धने' ॥ ८२ ॥ 'मदे' तु बस्तिरोगघ्नं कफपित्तविनाशनं । रक्तप्रदरहं 'भावे' अश्मरीघ्नं तथा 'द्रवे' ॥ ८३ ॥ छर्दिमूर्च्छाहरं चैव दाहघ्नं 'गणनामके' । शुक्रशुद्धिकरं चैव रक्तशुद्धिकरं तथा ॥ ८४ ॥

## ४४ हरिद्दर्भ—बड़ाकुश ।

नामानि—कुशोन्यः शरपत्रश्च हरिद्दर्भः पृथुच्छदः । शिरी च रूक्षदर्भश्च दीर्घपत्रः पवित्रकः ॥ ८५ ॥ प्रोक्तो 'राजनिघंटे' तु भिषग्विद्याविशारदैः । खरोन्यः पृथुलः शीरो गुंद्रा वानीरजो 'धने' ।

गुणाः—दर्भाद्वौ च गुणे तुल्यो तथापि च सितोधिकः । यदि श्वेतकुशाभावस्त्वपरं योजयेद्भिषक् ॥ ८७ ॥

## ४५ वल्वजा—नरई ।

नामानि—वल्वजा द्रढपत्री च तृणेक्षुस्तृणवल्वजा । मौंजीपत्रा द्रढ़तृणा पानीयाश्चा द्रढक्षुरा ॥ ८८ ॥ प्रोक्ता 'राजनिघंटे' तु वैद्यविद्याविशारदैः ।

गुणाः—वल्वजा मधुरा शीता पित्तदाहतृषापहा ॥ ८९ ॥ वातप्रकोपनी रुच्या कंठशुद्धिकरी 'नृपे' ।

## ४६ कत्तृण—रोहिसघास, गन्धेजघास ।

कुतृणं कत्तृणं भूतिर्भूतिकं रोहिषं तृणं ॥ ९० ॥ श्यामकं ध्यामकं पूतिर्मृद्वलं देवदग्धकं । प्रोक्तं 'राजनिघंटे' तु भिषकशास्त्रपंडितैः ॥ ९१ ॥ 'धन्वे' तु सकलं पौरं पाटलं देवदंडकं । तथा 'मदनपाले' तु सरलं देवगंधकं ॥ ९२ ॥ 'गणे' बिंदुचितं 'कोशे' संप्रोक्तं देवजग्धकं ।

गुणाः—लघुरोहिषसंज्ञं तु कटुतिक्तकफापहं ॥ ९३ ॥ शस्त्रशल्यादिदोषघ्नं बालग्रहहरं 'नृपे' । हृद्रोगकण्ठहं चैव रक्तपित्तविनाशनं ॥ ९४ ॥ कफज्वरहरं चैव कासशूलहरं 'मदे' । कफपित्तक्रमिघ्नं च कण्डूविषज्वरघ्नकं ॥९५॥ वैद्यै 'गणनिघंटे' तु संप्रोक्तं नैव संशयः ।

## ४७ दीर्घरोहिषक-बड़ा रोहिस ।

नामानि—'नृपे' रोहिषकं दीर्घं द्रढकांडो द्रढच्छदं ॥ ९६ ॥ रागीष्टं दीर्घनालश्च तिक्तसारश्च कुत्सितं ।

गुणाः—दीर्घरोहिषकं तिक्तं कटूष्णं कफवातजित् ॥९७॥ भूतग्रहविषघ्नं च व्रणक्षतविरोपणं ।

## ४८ नल-नरकुल ।

नामानि—नलो नालो नडश्चैव कुशिरंध्रोथ कीचकः ॥ ९८ ॥ वंशांतरश्च धमनः शून्यमध्यो विभीषणः । छिद्रांतो मृदुपत्रश्च रंध्रपत्रो मृदुच्छदः ॥ ९९ ॥ नालवंशः पोटगलो 'राजनामनिघंटके' । वटश्च नर्तको रंध्री 'धन्वंतरिनिघंटके' ॥ २०० ॥ मृत्युपुष्पः 'कैयदेवे' पीटस्तु 'द्रव्यरत्नके' । 'मदे' पिठः पुष्पमृत्युर्नलिको 'गणनामके' ॥ १ ॥

गुणाः—नलः शीतकषायश्च मधुरो रुचिकारकः । रक्तपित्तप्रशमनो दीपनो वीर्यदो 'नृपे' ॥ २ ॥ वृद्धस्त्रीयोनिमूत्रार्तिपित्तदाहविसर्पनुत् । चोष्णश्च 'कैयदेवे' तु 'द्रव्ये' कृच्छ्रहरः स्मृतः ॥ ३ ॥ रक्तदाहहरश्चैव कफपित्तहरो धन्वे । 'भावे' रक्तप्रदरहा हृद्योनिबस्तिरोगहा ॥ ४ ॥ वस्तिशूलाश्मरीपित्तरोगघ्नो 'गणनामके' ।

## ४९ महानल-बड़ानरकुल ।

नामानि—'नृपे' महानलो वन्यो देवनालोत्तमो नलः ॥५॥ स्थूलनालः स्थूलदंडः सुरनालः सुरद्रुमः ।

गुणाः—देवनालोति मधुरो वृष्य ईषत्कषायकः ॥ ६ ॥ नलः स्यादधिको वीर्ये शस्यते रसकर्मणि ।

## ५० नीलदूर्वा-हरीदूब ।

नामानि—स्यान्नीलदूर्वा हरितं च शाम्भवी श्यामा च शांता शतपर्विकामृता । पूता शतग्रंथिरनुष्णवल्लिका शिवा शिवेष्टापि च मंगला जया ॥ ७ ॥ सुभगा भूतहंत्री च शतमूला महौषधी ॥ ८ ॥ अमृता विजया गौरी शांता च 'नृपनामके' । शतपर्वा शीतवीर्या शतवल्ली च शीतला ॥९॥ हरितं शाड्वलं शष्पं 'धन्वंतरिनिघंटके' । सहस्रवीर्यानन्ता च प्रोक्ता 'भावप्रकाशके' ॥ १० ॥

गुणाः—नीलदूर्वा 'नृपे' शीता मधुरा तिक्तरोचनी । रक्तपित्तातिसारघ्नी कफवातज्वरापहा ॥ ११ ॥ वान्तिहृद्रक्तपित्तघ्नी कफपित्तहरा 'द्रवे' । 'धन्वन्तरिनिघण्टे' च संप्रोक्ता श्लेष्मवातला ॥२१२॥

## ५१ श्वेतदूर्वा-सफेद दूब ।

नामानि—गोलोमी श्वेतदूर्वा च सिताख्या तदनन्तरं ॥ १३ ॥ चण्डा भद्रा भार्गवी च गौरी चैवा तु दुर्भरा । विघ्ना ईशानकान्ता च श्वेतानन्ता च दिव्यका ॥ १४ ॥ श्वेतकांडा प्रचण्डा च तथैव सुखवल्लभा । सहस्रवीर्या तु शुभा तथा सहस्रकांडका ॥ १५ ॥ सहस्रपर्वा स्वच्छा च सुपर्वा तु सितच्छदा । कच्छान्तरुहा च तथा 'राजमामनिघंटके' ॥ १६ ॥ भार्गवी तु रुहा 'धन्वे' श्वेतदण्डा सितालता ।

गुणाः—श्वेतदूर्वातिशिशिरा मधुरा वान्तिपित्तजित् ॥ १७ ॥ आमातिसारकासघ्नी रुच्या दाहतृषापहा । 'नृपे' प्रोक्ता तथा 'भावे' कषाया च विसर्पजित् ॥ १८ ॥

## ५२ वल्लीदूर्वा-लता दूब ।

नामानि—मालादूर्वा वल्लिदूर्वालिदूर्वा मालाग्रंथिग्रंथिला ग्रन्थि-दूर्वा । मूलग्रन्थिर्वल्लरी ग्रंथिमूला रोहत्पर्वा पर्ववल्ली सिताख्या ॥ १९ ॥

गुणाः—वल्लिदूर्वा सुमधुरा कफवान्तितृषापहा । पित्तघ्नी शिशिरा तिक्ता 'राजनामनिघंटके' ॥ २० ॥

## ५३ गण्डदूर्वा-गाँठर दूब ।

नामानि—गंडाली स्याद्गंडदूर्वातितीव्रा मत्स्याक्षी स्याद्वा-रुणी मीननेत्रा । श्यामग्रन्थिग्रन्थिला ग्रन्थिपर्णी सूचीपत्रा श्याम-कांडा जलस्था ॥ २१ ॥ शकुलाक्षी कलाया च चित्रा तु 'राजना-मके' । बह्वी नाडी तथा प्रोक्ता वाल्ही तु शकुलाक्षिका ॥ २२ ॥ 'धन्वन्तरिनिघण्टे' तु मत्स्यगन्धा 'मदे' तथा ।

गुणाः—गंडदूर्वा तु मधुरा वातपित्तज्वरापहा ॥ २३ ॥ शिशिरा द्वंद्वदोषघ्नी श्रमतृट्श्रमहा 'नृपे' । लोहद्रावी दाहहा च बलासघ्नी च रक्तहा ॥ २४ ॥ पित्तक्षयहरा हैमा प्रोक्ता 'मदनपालके' । 'भावे' तु ग्राहिणी कुष्ठपित्तज्वरहरा स्मृता ॥ २५ ॥

## दूर्वासाधारणगुणाः ।

दूर्वा कषाया मधुराश्च शीतः पित्ततृषारोचकवान्तिहन्त्र्यः । सदाहमूर्च्छाग्रहभूतशान्तिश्लेष्मश्रमध्वसनतृप्तिदाश्च ॥ २६ ॥

## ५४ कुन्दरु ।

नामानि—कुन्दरुः कुन्दरो रुण्डी दीर्घपत्रः खरच्छदः । रसालः क्षेत्रसम्भूतः सुतृणो मृगवल्लभः ॥ २७ ॥

गुणाः—गौल्यं कुन्दरुमूलं च शीतं पित्तातिसारनुत् । प्रशस्तं गोधनानां च बलपुष्टिप्रदं 'नृपे' ॥ २७ ॥

## ५५ भूतृण-सुगन्धरोहिष ।

नामानि—भूतृणं रोहिणी भूतिर्भूतिकोऽथ कुटुम्बकः । माला-तृणं सुमाली च छत्रोऽतिच्छत्रकस्तथा ॥ २९ ॥ गुह्यबीजः सुगन्धश्च गुच्छालः पुंस्त्वविग्रहः । बधिरश्चातिगन्धश्च शृङ्गरोहस्तु ' राजके ' ॥ ३० ॥ गुच्छश्चैव तथा प्रोक्तो वैद्यविद्याविशारदैः ।

गुणाः—भूतृणं कटुतिक्तं च वातसन्तापनाशनं ॥ ३१ ॥ हन्ति भूतग्रहावेशान्विषदोषांश्च 'राजके' । उदर्दक्रिमिकासघ्नं कफश्लेष्मार्शोहं 'गणे' ॥ ३२ ॥ तीक्ष्णमुष्णं विदाही च दीपनं लघु रोचनं । रूक्षं च मुखशुद्धं स्यादवृष्यं पित्तदूषकं ॥ ३३ ॥ रक्तदूषकमित्युक्तं वैद्यै 'र्भावप्रकाशके' ।

## ५६ सुगन्धभूतृण—सुगन्धी घास ।

नामानि—सुगन्धभूतृणश्चान्यः सुरसः सुरभिस्तथा ॥ ३४ ॥ गन्धतृणः सुगन्धश्च मुखवासस्तु 'राजके' तथा 'गणनिघंटे' तु वैद्यैः प्रोक्तं सुगन्धिकं ॥ ३५ ॥

गुणाः—गन्धतृणं सुगन्धि स्यादीपत्तिक्तं रसायनं । स्निग्धं मधुरशीतं च कफपित्तश्रमापहं ॥ ३६ ॥

## ५७ ऊखल—ऊखलतृण ।

नामानि—ऊखलो भूरिपत्रश्च सुतृणश्च तृणोत्तमः ।

गुणाः—ऊखलो बलदो रुच्यः पशूनां सर्वदा हितः ॥ ३७ ॥ प्रोक्तो 'राजनिघंटे' तु भिषक्शास्त्रपरायणैः ।

## ५८ इक्षुदर्भा—इक्षुदर्भ ।

नामानि—इक्षुदर्भा सुदर्भा च पत्रालुस्तृणपत्रिका ॥ ३८ ॥

गुणाः—इक्षुदर्भा सुमधुरा स्निग्धोष्णा तु कषायका । कफपित्तहरा रुच्या लघुः सन्तर्पणी 'नृपे' ॥ ३९ ॥

## ५९ गोमूत्रिका—गोमूत्रतृण ।

नामानि—गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ॥ ४० ॥

गुणाः—गोमूत्रिका तु मधुरा वृष्या गोदुग्धदा 'नृपे' ।

## ६० शिल्पिका-शिल्पिकतृण ।

नामानि—शिल्पिका शिल्पिनी शीता क्षेत्रजा च मृदुच्छदा ।४१।

गुणाः—शिल्पिका मधुरा शीता तद्वोजं बलदं 'नृपे' ।

## ६१ निःश्रेणिका—निश्रेणीतृण ।

नामानि—निःश्रेणिका श्रेणिका च नीरसा वनवल्लरी ॥२४२॥ वनवल्लभा तथा प्रोक्ता 'राजनामनिघंटके' ।

गुणाः—निःश्रेणिका नीरसोष्णा पशूनामबलप्रदा ॥ २३६७ ॥